# पुराणानां काव्यरूपताया विवेचनम्

रामप्रतापो वेदालङ्कारः
एम० ए०, साहित्याचार्यः, पीएच० डी०
जम्मूविश्वविद्यालये संस्कृतविभागस्य प्रवक्ता




जम्मूविश्वविद्यालयः, जम्मू तवी

प्रधानसम्पादिका
डा० वेदकुमारी
जम्मूविश्वविद्यालये संस्कृतविभागस्याचार्याऽध्यक्षा च



प्रथमसंस्करणम् १९७४

मूल्यम् २५ रूप्यकाणि

मुद्रकाः—श्री भारत भारती (प्राइवेट) लिमिटेड
स्ट्रीट नं० १, १ अन्सारी रोड, दरियागंज, दिल्ली

# PURĀṆĀNĀM KĀVYARŪPATĀYĀ VIVECANAM

(A CRITICAL STUDY OF THE ELEMENTS OF POETRY IN THE PURĀṆAS)

RAM PRATAP VEDALANKAR
M. A., Sahityacharya, Ph. D.
LECTURER, THE DEPARTMENT OF SANSKRIT
JAMMU UNIVERSITY, JAMMU TAWI




JAMMU UNIVERSITY, JAMMU TAWI

# FOREWORD

I have great pleasure in introducing to the world of scholars the work : *Purāṇeṣu Kāvyarūpatāyā Vivecanam*, a study from the point of view of Poetics of the Purāṇas. Since the bulk of material on Poetics as a science is available only in two of the Purāṇas, the *Agni* and the *Viṣṇudharmottara*, no particular objection may be taken to the title of the book. The examples of the definitions of some of the principles of Poetics as found in the above Purāṇas, the author tries to trace to the other Purāṇas, viz., the *Viṣṇu*, the *Mārkaṇḍeya* and the *Bhāgavata*. The study would have gained immensely in depth and perspective had he been able to include in it other Purāṇas too. But then it was obviously difficult for a single individual. A team only could accomplish it.

The Purāṇas represent a literature that has grown over the centuries and in their gamut include practically everything from philosophy and religion to cosmogony and poetics, from grammar and lexicography to geography. It is rather a disconcerting feature of oriental research that this class of literature has not attracted the attention of scholars as much as it should have. Few of the Purāṇas have been edited critically so far.[1] It is a moot point to consider as to whether a study of any Purāṇa, however painstaking and laborious it may be, is really worthwhile at all when its authentic text has not yet been decided ! The very nature of the Purāṇas—they were popular texts handled by Sūtas and others who recited them to the people at large—has created a problem. Generations of the Sūtas or rhapsodists continued tampering with the text adding to it or omitting something from it to suit the mood of the audience, with the result that a large number of interpolations

1. All India Kashiraj Trust at Varanasi is now at it. So far it has brought out the critical edition of only one Purāṇa, the *Vāmana-purāṇa*.

have crept into them. It is a challenge to oriental scholarship to identify those interpolations, to sift the grain from the chaff and constitute the text of the Purāṇas on the basis of the now well-defined principles of critical text-editing.

Since it is a time-consuming process, it would be too much to expect scholars not to take notice of this vast literature, though the conclusions arrived at may lack scientific precision in the absence of the constituted text. These could be revised later when it becomes available.

We have so far had studies on the Purāṇas[1] with reference to society or culture (depicted in them) or religion of philosophy or language but so far none on the principles of Poetics discussed in them. Viewed in this light the present study should be warmly welcomed by scholars.

The present work is a part of Ph.D. thesis : *Purāṇeṣu Vyākaraṇālaṅkārarasādivicāraḥ* approved in 1962 by the University of Delhi for its Ph.D. degree. During the past decade or so the author has thoroughly revised and recast it, also adding much to his original work.

The work is written in delightful Sanskrit racy and crisp. It is a welcome addition to modern Sanskrit literature. I hope scholars will like it and profit by it. Since the author has given definitions of principles of Poetics from the works of well-known rhetoricians like Bhāmaha, Daṇḍin and Mammaṭa, and definitions given in the Purāṇas, the present study assumes added significance particularly in the context of the study of the historical development and evolution of the science of Poetics in India. A keen and penetrating scholar, Dr. Ram Pratap has done full justice to his subject. The world of scholars expects many more studies of this kind from him.

—*SATYA VRAT SHASTRI*

'Surabhi'
3/54, Roop Nagar,
Delhi-7.

Professor and Head,
Department of Sanskrit,
University of Delhi.

1. *Agnipurāṇa—A Study; Vāyupurāṇa—A Cultural Study; Vāmānapurāṇa—A Study; Matsyapurāṇa--A Study; Philosophy of the Bhāgavatapurāṇa; The Language of the Bhāgavatapurāṇa* etc.

# प्राक्कथनम्

पुराणानां काव्यरूपताया विवेचनमिति ग्रन्थं विदुषः परिचाययतो मे महान् प्रहर्षः । अयं हि १९६२ तमे वर्षे दिल्लीविश्वविद्यालयस्य पीएच० डीत्युपाध्यर्थं स्वीकृतस्य 'पुराणेषु व्याकरणालङ्काररसादिविचार' इत्याख्यस्य शोधप्रबन्धस्यैवांशः कालपर्यायेण सुतरां संस्कृत उपबृंहितश्च । अत्र ह्यग्निविष्णुधर्मोत्तरपुराणे लक्षणत्वेनाधृते विष्णुमार्कण्डेयभागवतपुराणानि च लक्ष्यत्वेनाधृतानि । काव्यालङ्काररसादिविषयकानि यानि लक्षणानि पुराणद्वय्यां सन्ति तानि पुराणत्रय्या उदाहृतानि ।

पुराणनाम्ना यः प्रथते ग्रन्थराशिस्तस्य सम्यगालोचनस्य परीक्षणस्य च महती व्यपेक्षेति नापेक्ष्यते बहु वचः । अयं हि राशिर्महान्तं कालं व्याप्य तिष्ठति । लक्षशः पद्येष्वत्र यन्निबद्धं तदध्ययनेन वयं पुराणकालस्य विषये बहु ज्ञातुं प्रभवामः । अद्यावध्यल्पीयांस एव तद्विषयका ग्रन्थाः प्राकाश्यमिताः । किञ्च पुराणानां प्रामाणिकानि संस्करणान्यपि नाद्यावधि कृतानि विद्वद्भिः । केवलं वामनपुराणमेवात्रापवादः । पुराणानि बहुपाठानीति योगवासिष्ठरामायणादिष्वप्युक्तम् । तेषां बहुपाठत्वे तत्स्वरूपमेव कारणतामियर्ति । सूतादिभिरन्यैर्वा प्राकृतानां जनानां पुरतस्तेषां पाठः क्रियते स्म । पाठकाले च तत्तत्प्रसङ्गनिरूपणावसरे पाठपरिवर्धनं तत्परिवर्तनं वा तद्भ्रंशो वा तैः क्रियते स्म । एवं कालेन पुराणानां पाठे सञ्जातं महत्परिवर्तनम् । कश्च तेषां मूलपाठ इति निर्णयो न सम्प्रति सुकरः । तथापि क्रियते यदि तदर्थं प्रयत्नस्तर्हि सिद्धिर्लभ्येतैवेति दृढं विश्वसिमः । इदं तावदत्र विमृश्यं भवति यावन्न पुराणानां पाठनिर्णयस्तावत्तत्समीक्षणमप्युपयोगि स्यान्नवेति, यतो हि यं पाठमाधृत्य प्रवर्त्यते विचारः सिद्धान्तो वा स्थाप्यते स्यान्नाम स प्रक्षिप्त एव । तेन च तस्य विचारस्य सिद्धान्तस्य वा मूलोच्छेद एव स्यात् । तेन समालोचनं संस्करणं च पुराणानां प्रथमकर्त्तव्यत्वेनापतति । तत्र च सुनिश्चिता विदुषां सुपरिचिताश्च सन्ति केचन सिद्धान्ताः । परं नैकपुरुषसाध्यमिदं कर्मापितु नैकपुरुषसाध्यमेव । एतावता च पुराणविमर्शे प्रत्युदासीनैरेव विद्वद्भिः स्थेयमिति नापतति । तैरालोचनात्मकसंस्करणाभावेऽपि क्रियमाणाः प्रयत्ना विद्वद्भिरनुमोदनीया ज्ञानं वर्धयन्तीति कृत्वा । पुराणपरिशीलने महान् खल्वानन्दः । तत्र प्रतिपादितो विषयो यदि स्वकीयया वाचोपनिबध्यते तद्रहस्यं वाऽऽकलय्यते तेन महदुपकृतं भवति सर्वस्यापि साहितीजुषः । उपलब्धेष्वा-

लोचनात्मकेषु संस्करणेषु प्रवर्तयिष्यत एव विद्वद्भिर्हेयोपादेयनिर्णय इति नापेक्ष्यते किमपि वचनम्।

प्रबन्धेऽस्मिन् विद्वद्भिर्डा० रामप्रतापमहोदयैर्भामहदण्डिमम्मटादीनां काव्यसिद्धान्ता अपि निर्दिष्टाः। तेषां पुराणगतसिद्धान्तसाम्यवैषम्यनिदर्शनेन काव्यशास्त्रविकासेतिहासाध्ययने ग्रन्थस्यास्य विशिष्टं स्थानं भवेदिति नागोचरं सुधियाम्।

सुललितसंस्कृतेनोपनिबद्धोऽयं ग्रन्थः। प्राञ्जला रमणीया चात्र विषयप्रतिपादनशैली। आधुनिक्या पद्धत्यापि संस्कृतेन ग्रन्थप्रणयनं सम्भवीति संस्कृतस्य सर्वतोमुखत्वमनेन ग्रन्थेन साधितं भवति। एतद्ग्रन्थप्रणयनेन सर्वथा साधुवादार्हा ग्रन्थकर्त्तारः। सन्ति कतिपयानि सांस्कृतिकदृष्ट्या दर्शनादिदृष्ट्या वा पुराणानामध्ययनानि कतिपयैर्विद्वद्भिः कृतानि परं काव्यशास्त्रदृष्ट्येदमेवेदम् प्रथममध्ययनमिति सुतरां प्रसीदमानमानसो नैकैवंविधग्रन्थप्रणयनं डा० रामप्रतापमहाभागेभ्य आशासानो नैकाभिराशीर्भिश्च तान् वर्धयमानो विरमाम्यहम्।

सुरभिः
३/५४, रूपनगरम्
दिल्ली-७

सुरसरस्वतीसमाराधनैकव्रतः
**सत्यव्रतशास्त्री**
दिल्लीविश्वविद्यालयसंस्कृतविभागाध्यक्षः

# विषयानुक्रमणिका



## उपोद्घात

(१-२४)



प्रथमोऽध्यायः

## अलङ्कारविवेचनम्

(२५-८१)



द्वितीयोऽध्यायः

## रसविवेचनम्

(८३-१३७)

तृतीयोऽध्यायः

## दोषविवेचनम्

(१३९-१५३)



चतुर्थोऽध्यायः

## गुणविवेचनम्

(१५५-१७४)



पञ्चमोऽध्यायः

## रीतिविवेचनम्

(१७५)

# सम्पादकीयम्

पुराणपूर्णचन्द्रेण श्रुतिज्योत्स्नाः प्रकाशिताः ।
नृबुद्धिकैरवाणां च कृतमेतत्प्रकाशितम् ॥

महाभारतम् १, १, ८६

महाभारतस्यानयोक्त्याऽन्यादिपुराणानि प्राचीनकालादेव मानवसमाजाय ज्ञानराशिं व्यतरन्निति स्फुटं प्रतीयते । लौकिकालौकिकसर्वविधविद्योपेतत्वादेवेमानि पुराणानि विश्वकोशसञ्ज्ञामवाप्नुवन् । एषु ग्रन्थेषु नानाख्यानकथनकारिणीं पद्धतिमवलम्ब्य धर्मदर्शननीतितत्त्वभूगोलेतिहासकाव्यसंगीतादयो विविधा विषयाः प्रतिपादिता आलोचिताश्च । अतएव विविधविद्यानामनल्पं ज्ञानमधिगन्तुं पुराणानामध्ययनं नितरामावश्यकमुपयोगि च । एतेषामध्ययनेन विना शास्त्रेषु वैचक्षण्यस्य प्राप्तिर्न सम्भवतीति वायुपुराणेनापि निगदितम्—

**यो विद्याच्चतुरो वेदान् साङ्गोपनिषदो द्विजः ।**
**न चेत्पुराणं संविद्यान्नैव स स्याद् विचक्षणः ॥**

वा० पु० १, २००

पुराणेषु प्राचीनराजवंशविषयिणी पुरावृत्तसम्बन्धिनी च प्रभूता सामग्री प्राप्यते इति सर्वं एफ० ई० पार्जिटरमहोदयेन स्वीये ग्रन्थरत्ने सुप्रतिपादितम् (Vide, A.I.H.T. Chapt. I, p. I)। हाज़राशिवदत्तज्ञानिवासुदेवशरणाग्रवालप्रभृतिभिर्विद्वद्भिरपि पुराणानामालोचनात्मकमध्ययनं विधाय तेषां सांस्कृतिकमैतिहासिकं राजनैतिकं च महत्त्वं संस्थापितम् । अस्मदीयसहयोगिना डा० रामप्रतापमहाभागेन स्वीयेऽस्मिन् प्रबन्धे चतुर्णामग्निविष्णुमार्कण्डेयभागवतपुराणानां काव्यरूपताया विवेचनं विहितम् । काव्यशास्त्रदृष्ट्या विहितमिदमध्ययनं विदुषां चित्तमाह्लादयिष्यतीत्यहमाशासे ।

**निगमकल्पतरोर्गलितं फलं शुकमुखादमृतद्रवसंयुतम् ।**
**पिबत भागवतं रसमालयं मुहुरहो रसिका भुवि भावुकाः ॥**

भाग० १, १, ३

इति पुराणवचनमेतेषां पुराणानां काव्यगौरवं सुतरां व्यनक्तीति । सदसद्व्यक्तिहेतवः सहृदया विद्वांसः प्रबन्धमेतं पठितुमर्हन्ति ।

शोधप्रबन्धोऽयं विश्वविद्यालयानुदानायोगप्रदत्तेनार्थिकसाहाय्येन प्राकाश्यं नीयते । अस्यां ग्रन्थप्रकाशनयोजनायामस्माभिर्जम्मूविश्वविद्यालयस्य कुलपतीनां श्रीमतां **जे० डी० शर्मणां** कुलसचिवानां **श्रीकेवलकृष्णगुप्तमहाभागानाञ्च** महती सहायतता समालब्धा । एतत्कृतेऽधिकारिण इमेऽस्मदीयधन्यवादानङ्गी कुर्वन्तु ।

जम्मूविश्वविद्यालयः
२५ मार्च, १९७४

**वेदकुमारी**
प्रधानसम्पादिका

# अवतारणम्

नानाविधविद्यानिधिभूतानामग्न्यादिपुराणानामनुशीलनेन नरः सर्वविद् भवतीत्यग्निपुराणे प्रोक्तम्—

**विद्यासारं यद्विदित्वा सर्वज्ञो जायते नरः ।**

अग्निपु० १, १२

प्राचीनकालादारभ्येदानीं यावत्पुराणवाङ्मयस्य धार्मिककृत्येषु, पठनपाठनेषु, काव्यनाट्यादिषु समीक्षणात्मकाध्ययनेषु च भूयानुपयोगः समजायत। न केवलं भारते वर्षेऽपित्वपरेष्वपि प्राच्यप्रतीच्यदेशेषु पौराणिकविचाराणां प्रभावः सुतरां विलोक्यते। अनेकैर्भारतीयैरितरैः पाश्चात्यैः पौरस्त्यैश्च विद्वद्भिः पुराणानामनुशीलनं विविधाभिर्दृष्टिभङ्गीभिर्व्यधायि। यदा मया १९५८ तमे वर्षे पुराणानां काव्यतत्त्वदृष्ट्या गवेषणमारब्धं तदैवंविधः प्रयासो न मे दृष्टिपथं समायातः। अतएवैनां सरणीमनुसरता मयाऽग्निविष्णुमार्कण्डेयभागवतपुराणानां विशेषाध्ययनं प्रारब्धम्। १९६२ तमे वर्षे 'पुराणेषु व्याकरणालङ्काररसादिविचारः' इति विषयमधिकृत्य मल्लिखितः प्रबन्धः 'पी-एच० डी०' इत्युपाधिप्रदानाय दिल्लीविश्वविद्यालयेन स्वीकृतः। सम्प्रति प्रकाशनसौकर्यमनुरुध्यास्मात्प्रबन्धाद् व्याकरणभागं वियोज्य 'पुराणानां काव्यरूपताया विवेचनम् इति सञ्ज्ञाऽस्य संशोधितप्रबन्धस्य कृते निर्धारिता। अत्राग्निपुराणप्रोक्तानि लक्षणान्यादाय तदुदाहरणानि विष्णुमार्कण्डेयभागवतपुराणेभ्यो गृहीतानि। अनेनैष प्रबन्धः काव्यशास्त्रविषयको लक्ष्यलक्षणसंग्रहात्मक एकः स्वतन्त्र इव ग्रन्थः सञ्जातः।

प्रबन्धलेखनपथप्रदर्शका दिल्लीविश्वविद्यालयस्थसंस्कृतविभागस्य भूतपूर्वाध्यक्षाः **डा० नरेन्द्रनाथचौधुरिणः, श्रीसत्यभूषणयोगिनः, डा० ज्ञानचन्द्राचार्याः, श्रीओजस्विशर्माणश्चाधुना** भूयोभूयः स्मर्यन्तेऽभिवन्द्यन्ते च। तेषां साहाय्येनैव दुस्तरोऽयमनुसन्धानोदधिर्मया लङ्घितः। जम्मूविश्वविद्यालयस्याधिकारिणः **श्री जे० डी० शर्माणः, श्रीकेवलकृष्णगुप्ताः, डा० वेदकुमारी** महोदया च मदीयान् धन्यवादानङ्गीकुर्वन्तु। एतेषां महानुभावानां प्रयत्नेनैव ग्रन्थस्यास्य प्रकाशनं सञ्जातम्।

दिल्लीविश्वविद्यालयस्य संस्कृतविभागाध्यक्षैर्विद्वद्वरेण्यैः **डा० सत्यव्रत शास्त्रिमहोदयै**रस्य प्रबन्धस्यामुखं लिखित्वा कृतार्थीकृतोऽयं जनः । अतस्तेषां कृपाभरो विनतेन शिरसा सादरमुह्यते । मुद्रणकार्यसहायकाः श्री भारतभारती प्रा० लिमिटेडाधिकारिणः कार्यकर्त्तारश्च मदीयधन्यवादभाजः ।

पुराणप्रसूनग्रथितेयं कृतिस्रक् संस्कृतानुरागिणां सहृदयानां सुधियां करपुटयोः समर्प्यते । एतां सन्तः समीक्षितुमर्हन्ति । यद्यनया विदुषामल्पीयानपि मनःपरितोषः स्यात्तर्हि फलेग्रहिः स्यान्ममायं प्रयासः ।

जम्मूविश्वविद्यालयः **रामप्रतापो वेदालङ्कारः**
२६–३–७४

## शब्दसंक्षेपः

| | |
|---|---|
| अग्निपु० | अग्निपुराणम् |
| अ०, अथ० | अथर्ववेदः |
| अलङ्कारशे० | अलङ्कारशेखरः |
| अ०, अष्टा० | अष्टाध्यायी |
| आप० | आपस्तम्बधर्मसूत्रम् |
| औचित्यवि० च० | औचित्यविचारचर्चा |
| ऋ० | ऋग्वेदः |
| काव्याद० | काव्यादर्शः |
| काव्यप्र० | काव्यप्रकाशः |
| काव्याल० | काव्यालङ्कारः (भामहकृतः) |
| काव्यालका० | काव्यालङ्कारः (रुद्रटकृतः) |
| काव्याल० सा० स० | काव्यालङ्कारसारसंग्रहः |
| काव्याल० सू० वृ० | काव्यालङ्कारसूत्रवृत्तिः |
| काव्यमी० | काव्यमीमांसा |
| कौटि० अर्थ० | कौटिलीयार्थशास्त्रम् |
| गोपथ० | गोपथब्राह्मणम् |
| छान्दोग्य० | छान्दोग्योपनिषद् |
| दशरूप० | दशरूपकम् |
| देवीभागवतपु० | देवीभागवतपुराणम् |
| नाट्यशा० | नाट्यशास्त्रम् |
| नारदीयपु० | नारदीयपुराणम् |
| पद्मपु० | पद्मपुराणम् |
| ब्रह्माण्डपु० | ब्रह्माण्डपुराणम् |
| भविष्यपु० | भविष्यपुराणम् |
| भागवतपु० | भागवतपुराणम् |
| भागवतश्री० | भागवतपुराणस्य श्रीधरीय टीका |
| मत्स्यपु० | मत्स्यपुराणम् |

| | |
|---|---|
| महाभा० | महाभारतम् |
| मार्कण्डेयपु० | मार्कण्डेयपुराणम् |
| य० | यजुर्वेदः |
| रसगङ्गा० | रसगङ्गाधरः |
| रामा० | रामायणम् |
| वक्रोक्तिजी० | वक्रोक्तिजीवितम् |
| वायुपु० | वायुपुराणम् |
| विष्णुपु० | विष्णुपुराणम् |
| विष्णुध०, विष्णुधपु० | विष्णुधर्मोत्तरपुराणम् |
| व्यक्तिवि० | व्यक्तिविवेकः |
| शतपथ० | शतपथब्राह्मणम् |
| शाङ्खायनश्रौ० सू० | शाङ्खायनश्रौतसूत्रम् |
| शिवपु० | शिवपुराणम् |
| शृङ्गारप्र० | शृङ्गारप्रकाशः |
| सरस्वतीक० | सरस्वतीकण्ठाभरणम् |
| सा०, साम० | सामवेदः |
| साहित्यद० | साहित्यदर्पणः |
| सिद्धान्तकौ० | सिद्धान्तकौमुदी |
| हरिवंशपु० | हरिवंशपुराणम् |
| स० - स० इ० | समयादारभ्य-समयं यावदिति |
| स० इ० | समय इति |

# उपोद्घातः

## अनुसन्धानप्रयोजनम्

ऋग्यजुस्सामाथर्वाख्यैर्वेदैर्निरुक्तादिभिर्वेदाङ्गैः साङ्ख्यादिभिरास्तिकैस्त-दितरैरपि बौद्धादिदर्शनै रामायणमहाभारताभ्यां महाकाव्येतिहासाभ्यामन्यैश्चापि महार्घग्रन्थमण्डनैर्मण्डितायाः सुरभारत्या अनिर्वचनीयं खलु सौन्दर्यम्। अश्वघोषकालिदासभवभूत्यादिमहाकवीनां बुद्धचरिताभिज्ञानशाकुन्तलोत्तररामचरितादिभी रत्नैरलङ्कृतेयं भृशं चकास्ति। पुराणमणिमरीचिभिरपि खल्वेतस्या लावण्यमयी देहयष्टिर्देदीप्यमाना विराजते। परं पुराणानामालोचनात्मकाध्ययनाभावादेव तेषां सकलो महिमा न विदितः। आलोचनानिकषपरीक्षणान्तरमेषां महत्त्वं गौरवं च स्फुटं ज्ञायते नैकविधाश्चैतद्विषयकाः संशया अपि छिद्यन्ते।

अलङ्कारशास्त्रस्यास्मिन् भारते वर्षे प्राचीनकालादेवाध्ययनं समजनि। ऋग्वेदेऽलङ्काराणां भूयान् प्रयोग उपलभ्यते। नाट्यशास्त्रे भरतेन मुनिनाऽलङ्काराणां लक्षणान्युदाहरणानि च प्रास्तूयन्त। अनन्तरं च भामहेन, दण्डिना, वामनेनानन्दवर्धनेन, भोजराजेन, मम्मटेन, हेमचन्द्रेण, विश्वनाथेन, पण्डितराजजगन्नाथेनान्यैरपि बहुभिः प्रथितयशोभिर्विद्वद्भिश्चालङ्कारविषयः सूक्ष्मेक्षिकया व्यचार्यत। पुराणेष्वप्यलङ्कारविषयिणी सामग्री विद्यते। डा० काणेमहोदयेन, डा० सुशीलकुमारदे इति नामजुषा विदुषा डा० राघवनाख्यसुधिया चालङ्कारविषये भृशं विचारितम्। परं पुराणोपलब्धालङ्कारलक्षणान्येतेषां च प्रयोगानाश्रित्य विहितं सर्वाङ्गीणं गवेषणं दृष्टिपथं न समायाति। अस्मात् पुराणेष्वलङ्काराणां कीदृशी स्थितिरित्यधिगन्तुमस्मिन् विषयेऽपि गवेषणाया नितरामपेक्षा।

एवमेव रसदोषगुणरीतिविषये भामहदण्डिवामनभोजराजादिभिः प्राचीनैराचार्यैर्बहु लिखितम्। अर्वाचीनैश्च डा० पी० सी० लाहिरी—रामचन्द्रशुक्ल-डा० एस० के दे—डा० के० सी० पाण्डेय—डा० राघवनप्रभृतिभिर्विबुधैरप्येतेषां तुलनात्मकमालोचनात्मकं विवेचनं विहितम्। परं पुराणेष्वेतेषां कीदृशानि लक्षणानि कीदृशाः प्रयोगा अन्यैश्च काव्यशास्त्रीयग्रन्थैः सह कतमत्साम्यं कतमच्च वैषम्यमिति तु न तैर्व्यमर्शि। एवमत्रापि विचारावकाशो दृश्यते।

अन्यच्च पुराणानां विषयप्रतिपादनरीतिः प्रसादगुणोपेता। अपि चात्र दुरूहा विषयाः सरलीकृत्योपवर्णिता निरुपयोगिनश्च नालोचिताः। एषु ग्रन्थेषु अलङ्काररसदोषगुणरीतिविषया नातिसङ्क्षेपेण नातिविस्तरेण च व्याख्याताः।

व्याकरणस्य प्रमुखतमाः सन्धिसमासकारकसम्बन्धिनियमा उपमारूपकादयः प्रधानतमा अलङ्काराः शृङ्गारादयो रसा असाधुत्वादयो दोषा माधुर्यादयो गुणाः पाञ्चाल्यादयो रीतयश्चात्र सुविशदं व्याख्याताः । संस्कृतवाङ्मये सर्वानेतान् विषयानधिकृत्य बहवो बृहदाकारा ग्रन्था अतिविस्तरेण लिखिताः । परं पुराणेष्विमे सर्वे संक्षेपेण वैशद्येन च प्रतिपादिताः । अनावश्यकविस्तरोऽनावश्यकसंक्षेपो वा नात्र विलोक्यते । एवमेव कतिपयेषु पुराणेषु अलङ्काररसदोषगुणरीतीनां निदर्शनानि प्राचुर्येणोपलभ्यन्ते ।

प्रायशः सर्वेष्वेव पुराणेष्वलङ्कारादीनां तुलनात्मकालोचनात्मकं चोभयविधमेवाध्ययनं विधातुं विपुला सामग्री प्राप्यते । यत्रकुत्रचिच्चानेके नवीना विचारा नूतनाश्च प्रयोगा द्रष्टुं शक्यन्ते । एतत्सर्वमधीत्य काव्य-शास्त्रसम्बन्धिज्ञानं संवर्धते । पुराणानामिदं सर्वं वैशिष्ट्यमेवास्य विशेषाध्ययनस्य निमित्तं सञ्जातम् ।

## विषयवस्तुनिर्देशः

पुराणेष्वग्निविष्णुमार्कण्डेयभागवतानीति चत्वारि पुराणानि विशेषेणात्र प्रबन्धे विषयीकृतानि । अग्निपुराणस्य कतिपयाध्यायेषु अलङ्काररसदोषगुणरीतिविषयकनियमलक्षणान्युपलभ्यन्ते । अग्निविष्णुधर्मोत्तरपुराणयोरलङ्काररसरीत्यादीनां लक्षणान्युक्तानि । एषां लक्षणानां काव्यालङ्कारकाव्यादर्शसरस्वतीकण्ठाभरणोक्तलक्षणैः सह तुलनात्मिकाऽधीतिरत्र प्रस्तुता । अन्येषु विष्णुमार्कण्डेयभागवतेष्वलङ्काररसदोषगुणरीतीनां बहून्युदाहरणान्युपलभ्यन्ते । एतेषूदाहरणेषूपमाद्यलङ्काराणां शृङ्गारादिरसानामसाधुत्वादिदोषाणां माधुर्यादिगुणानां पाञ्चाल्यादिरीतीनां च समुचितान्युदाहरणान्युपन्यस्तानि ।

अलङ्कारादीनां नियमलक्षणोदाहरणानामग्निपुराणे यादृशं सुविशदं सविस्तरं च वर्णनं न तादृशमन्यस्मिन् कस्मिंश्चिदपि पुराणे । एवमेव विष्णुमार्कण्डेयभागवतपुराणानामपि काव्यदृष्ट्याऽन्येषु पुराणेषु विशिष्टं स्थानम् । अत एवैषां पुराणानां काव्यशास्त्रस्य दृष्टिभङ्ग्याऽध्ययनं विधातुं शक्यते । अस्मादेतत् पुराणचतुष्टयमेव विशेषाध्ययनायाङ्गीकृतम् । अपि चाष्टादशपुराणानामतिविस्तृतत्वात्तेषामेवंविधमध्ययनमतीव दुष्करं विपुलकालापेक्षि च ।

अस्मिन् प्रबन्धेऽग्निविष्णुमार्कण्डेयभागवतपुराणेषूपलब्धानामलङ्काररसदोषगुणरीतिविषयकनियमलक्षणोदाहरणानामालोचनात्मकं तुलनात्मकं चाध्ययनं विहितम् । एतदर्थ–मयमादावुपोद्घातेन मध्ये चतुर्भिरध्यायैरन्ते चोपसंहारेण संवलितः ।

उपोद्घातेऽनुसन्धानप्रयोजनमुपवर्ण्य प्रबन्धान्तर्गतानां चतुर्णामध्यायानां वर्ण्यविषयाः सङ्क्षेपेण निर्दिष्टाः । अपि च विशेषाध्ययनायाङ्गीकृतानां चतुर्णामग्न्यादिपुराणानां वर्ण्यविषयान् कालं च विचार्य तुलनात्मकाध्ययनोपयोगिकतिपयग्रन्थानां संक्षिप्तः परिचयोऽपि समाविष्टः ।

प्रथमेऽध्यायेऽलङ्कारशब्दस्यार्थं प्रोच्याग्निपुराणवर्तिकाव्यशास्त्रीयभागस्य कालः सम्प्रदायोऽग्निपुराणवर्णितालङ्काराणां च वैशिष्ट्यं निरूपितम् । अथ च काव्यालङ्कारकाव्यादर्शसरस्वतीकण्ठाभरणोक्तालङ्कारलक्षणैः सार्धमग्निविष्णुधर्मोत्तरस्थालङ्कारलक्षणानां तुलनात्मकमध्ययनमनुष्ठायाग्निविष्णुमार्कण्डेयभागवतपुराणेभ्यस्तेषामुदाहरणानि प्रदर्शितानि । अग्निपुराणस्थालङ्कारभागस्य विष्णुमार्कण्डेयभागवतपुराणप्रयुक्तानामलङ्काराणां चाप्यत्र समीक्षणं व्यधायि । एतदधीत्य पुराणेष्वलङ्काराणां कीदृशानि लक्षणानि के के चालङ्कारा एषु प्रयुक्ता इति सर्वं स्फुटीभवति ।

द्वितीयेऽध्याये पूर्वं रसशब्दस्यार्थोऽनन्तरञ्चाग्निपुराणवर्तिरसभागस्य वैशिष्ट्यं साधारणीकरणसिद्धान्तपरम्परायां चैतत्पुराणोपलब्धमतस्य महत्त्वं प्रकटितम् । अपि च सरस्वतीकण्ठाभरणोक्तरसलक्षणैः सहाग्निविष्णुधर्मोत्तरपुराणवर्णितरसलक्षणानां तुलनां विधाय प्रधानतमानां रसानां निदर्शनानि विष्णुमार्कण्डेयभागवतपुराणेभ्यः समादायात्र सन्निहितानि । अग्निपुराणस्थरसभागो विष्णवादिपुराणत्रयप्रयुक्ताश्च रसा अप्यत्र समीक्षिताः । एतेन खलु पुराणेषु रसस्य कीदृशी स्थितिरिति ज्ञातं शक्यते ।

तृतीयेऽध्याये दोषशब्दस्यार्थं विचार्याग्निपुराणवर्तिदोषभागस्य वैशिष्ट्यं निगदितम् । अग्निपुराणोपलब्धदोषलक्षणानां च काव्यालङ्कारकाव्यादर्शसरस्वतीकण्ठाभरणोक्तदोषलक्षणैः सह तुलनात्मकाध्ययनपुरस्सरं प्रसिद्धानां दोषाणामुदाहरणानि विष्णुमार्कण्डेयभागवतपुराणेभ्य आविष्कृत्य सङ्कलितानि । अग्निपुराणोक्तदोषभागस्य विष्णुमार्कण्डेयभागवतपुराणदृष्टदोषाणां च समीक्षाऽप्यत्र विहिता ।

चतुर्थाध्यायस्य प्रथमे विभागे गुणशब्दस्यार्थं विमृश्याग्निपुराणवर्तिगुणभागस्य वैशिष्ट्यमभिधायाग्निपुराणकाव्यालङ्कारकाव्यादर्शसरस्वतीकण्ठाभरणोक्तगुणलक्षणानां तुलनात्मकाध्ययनपुरस्सरं प्रधानानां गुणानां निदर्शनानि विष्णुमार्कण्डेयभागवतपुराणेभ्यः समाहृतानि । अग्निपुराणस्थगुणभागो विष्णवादिपुराणेषु प्रयुक्ताश्च गुणा अप्यत्र समालोचिताः । द्वितीये च विभागे रीतिशब्दस्यार्थमग्निपुराणवर्तिभागस्य च वैशिष्ट्यमाख्यायाग्निपुराणसरस्वतीकण्ठाभरणोक्तरीतिलक्षणानां तुलनात्मकेनाध्ययनेन सहैव विष्णुमार्कण्डेयभागवतपुराणेभ्यश्चतसृणां रीतिनामुदाहरणान्युपन्यस्तानि । विष्णुमार्कण्डेयभागवतपुराणेषु काः का

रीतयः प्राधान्येन प्रयुक्ता इत्यवगन्तुमप्यत्र प्रयतितम् । अनेनापि पुराणेषु गुणरीतीनां कीदृशो विचारः कीदृशाः प्रयोगाश्चेति विशदीक्रियते ।

—०—

## पुराणशब्दस्यार्थः

हलायुधकोशे पुराणशब्दस्य—पुरा पूर्वस्मिन् काले भव इति व्युत्पत्तिनिमित्तोऽर्थो विहितः ।[1] वायुपुराणेऽपि प्रकारान्तरेणायमेवार्थः प्रदर्शितः । तत्रेदमुक्तम्—

**यस्मात्पुरा ह्यनितीदं पुराणं तेन तत्स्मृतम् ।[2]**

अस्यां व्युत्पत्तौ यत्किमपि वस्तु पुरातनकालादेवानिति (प्राणिति) तत्पुराणमिति नाम लभते । अस्य प्रवृत्तिनिमित्तोऽर्थः पञ्चलक्षणात्मकं दशलक्षणात्मकं वा ग्रन्थं निर्दिशति ।[3] अग्न्यादिग्रन्थपरोऽयं शब्दो नपुंसके प्रयुज्यते ।

## अग्न्यादिपुराणचतुष्टयस्य विषयाः कालश्च

### १. अग्निपुराणम्

इदं पुराणमग्निना वशिष्ठाय वशिष्ठेन च व्यासाय प्रोक्तम् । अग्निप्रोक्त-

---

१. पुराणः…(पुरा पूर्वस्मिन् काले भव इति । पुरा+सायंचिरं-प्राह्णे प्रगेऽव्ययेभ्यष्ट्युटचुलौ तुट् च इति ट्युनिपातनात् तुडभावः) । हलायुधकोशः, पृ० ४३८

२. वायुपु०, १, १८३ खेमराजः श्रीकृष्णदासः लक्ष्मीवेङ्कटेश्वर प्रेस, बम्बई १९३३ तमः क्रैस्ताब्दः

३. (१) (कः) सर्गस्य प्रतिसर्गस्य वंशमन्वन्तरस्य च ।
वंशानुचरितादेश्च मत्स्यकूर्मादिरूपधृक् ॥ अग्निपु० १,१४

(खः) सर्गश्च प्रतिसर्गश्च वंशमन्वन्तराणि च ।
सर्वेष्वेतेषु कथ्यन्ते वंशानुचरितं च यत् ॥ विष्णुपु० ३,६,२५

(गः) सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ।
वंशानुचरितं चैव पुराणं पञ्चलक्षणम् ॥ मार्कण्डेयपु० १३४,१३

(२) सर्गोऽस्याथ विसर्गश्च वृत्ती रक्षान्तराणि च ।
वंशो वंशानुचरितं संस्थाहेतुरपाश्रयः ॥
दशभिर्लक्षणैर्युक्तं पुराणं तद्विदो विदुः ॥ भागवतपु० १२,७,८-९

त्वादस्याग्निपुराणमाग्नेयपुराणं वेति संज्ञा ।[1] यद्यप्यत्र पुराणे श्लोकानां सङ्ख्या द्वादशसहस्राणि निगदिता[2] तथापीदानींतनेषु संस्करणेषु ११४५७ श्लोका दृश्यन्ते। एतस्मिन् हि पुराणे प्रायशः सर्वेषां विषयाणां सविस्तरं वर्णनमनेनास्य पुराणस्य स्वरूपं विश्वकोशात्मकं जातम्। अस्मादेतदधीत्य नरः सर्वज्ञो जायते।[3] अत्र पुराणे विष्णोर्मत्स्यादयोऽवतारा वर्णिताः शिवसूर्यगणेशादीनामनेकेषां च देवानां पूजाविधयोऽपि निर्दिष्टाः। अनेनास्य केनचित्सम्प्रदायविशेषेण न कोऽपि सम्बन्धविशेष इति ज्ञायते।

अत्र पुराणे ३८३ अध्यायास्तेषु च विविधविषयाः सङ्कलिताः। अस्मिन् विष्णोर्विभिन्नावतारा, विभिन्नदेवानां पूजाविधयो, रामायणमहाभारते, सृष्ट्युत्पत्तिः, काश्यपवंशवर्णनं, कर्मकाण्डं, देवालयादिनिर्माणफलं, तीर्थमाहात्म्यं, श्राद्धवर्णनं, भारतवर्षवर्णनं, ज्योतिर्युद्धतन्त्रविद्या, वर्णाश्रमधर्मा, महापातकानि, प्रायश्चित्तानि, व्रतानि, नरकस्वरूपं, दानानि, शकुनापशकुनानि, राजधर्मा, विविधराजवंशवर्णनं, छन्दः शास्त्रं, काव्यशास्त्रं, व्याकरणशास्त्रं, स्वर्गपातालादिवर्गात्मकोशवर्णनमष्टाङ्गयोगविचारो, ब्रह्मज्ञानं, गीतासारो, यमगीता चेति प्रमुखतमा विषयाः।

अस्य पुराणस्य ३४९ तमादध्यायादारभ्य ३५९ तममध्यायं यावद् व्याकरणविषयः, ३३७ तमादध्यायादारभ्य ३४७ तममध्यायं यावच्च काव्यशास्त्रं सविस्तरं प्रतिपादितम्। एतत्पुराणस्य काव्यशास्त्रीयभागस्यात्र प्रबन्धे सविशेषमध्ययनं प्रस्तुतमत एवैतदध्यायान्तर्गतविषयस्यानुषङ्गिकत्वात्संक्षिप्तं वर्णनमधस्तात्प्रस्तूयते—

३४९ तमेऽध्याये प्रत्याहारसाधकसूत्राणामणादिप्रत्याहाराणां च कथनम्। ३५० तमेऽध्याये संधिसिद्धरूपप्रदर्शनार्थं दण्डाग्रमित्याद्युदाहरणानां निरूपणम्। ३५१ तमेऽध्याये स्वादिविभक्तिनिरूपणं प्रातिपदिकस्य पुंस्त्वादिभेदेन त्रिप्रकारकत्वस्य वर्णनं वृक्षादिसिद्धरूपकथनं च। ३५२ तमेऽध्याये रमादिस्त्रीलिङ्गानां

---

१. (कः) वसिष्ठ उवाच—

द्विविधं ब्रह्म वक्ष्यामि शृणु व्यासाखिलात्मगम्।
यथाग्निर्मा पुरा प्राह मुनिभिर्दैवतैः सह॥
अग्निनोक्तं पुराणं यदाग्नेयं वेदसम्मितम्॥ अग्निपु० १, ८-१०

(खः) अग्निना यद् वसिष्ठाय प्रोक्तं चाग्नेयमेव तत्॥ तत्रैव २७२,१०

२. द्वादशैव सहस्राणि सर्वविद्यावबोधनम्॥ तत्रैव २७२, ११

३. विद्यासारं यद्विदित्वा सर्वज्ञो जायते नरः॥ तत्रैव १, १२

३५३ तमेऽध्याये सर्वादिसर्वनाम्नां वार्यादिनपुंसकलिङ्गानां च शब्दानां सिद्ध-रूपाणि। ३५४ तमेऽध्याये कारकाणामभिधानम्। ३५५ तमेऽध्याये तत्पुरुषादि-समासानां, ३५६ तमेऽध्याये च तद्धितसिद्धरूपाणां कथनम्। उणादिसिद्धरूपाणि ३५७ तमेऽध्याये वर्णितानि। ३५८ तमेऽध्याये तिङ्विभक्तिसिद्धरूपाणि, ३५९ तमे चाध्याये कृत्सिद्धरूपाण्यभिहितानि।

३३७ तमेऽध्याये काव्यलक्षणं, काव्यस्य प्रकारत्रयं, गद्यकाव्यस्य पञ्चभेदा महाकाव्यलक्षणादिकथनं च। ३३८ तमेध्याये नाट्यस्य विविधभेदा उपरूपकाणि, प्रस्तावना पञ्चार्थप्रकृतयः पञ्च च सन्धयो वर्णिताः। ३३९ तमेऽध्याये शृङ्गा-रादयो रसा, रत्यादिस्थायिभावा, विभावानुभावव्यभिचारिभावा, नायकनायिकाभेदा अनुनायकादयः स्त्रीपुंसयोश्च भावादयः प्रपञ्चिताः। ३४० तमेऽध्याये चतस्रः पाञ्चाल्यादयो रीतयश्चतस्रश्च भारत्यादयो वृत्तयो निगदिताः। ३४१ तमेऽध्याये स्त्रीणां लीलाविलासादिभेदात्मिकाश्चेष्टाविशेषा नृत्यावसरे च प्रमुखानां मुखाद्य-ङ्गानामितरेषां च स्वल्पाङ्गानां सञ्चालनस्य प्रकारविशेषाः प्रदर्शिताः। ३४२ तमे-ऽध्यायेऽभिनयलक्षणानन्तरं शृङ्गारादिरसानां लक्षणानि भेदाश्च, अलङ्कारलक्षणं तत्प्रकारत्रयं नवविधाश्च शब्दालङ्कारा वर्णिताः। ३४३ तमेऽध्यायेऽनुप्रासादयः शब्दालङ्काराश्चित्राख्यकुतूहलाधायीवाग्बन्धो गोमूत्रिकादयश्च बन्धाः प्रोक्ताः। ३४४ तमेऽध्याये स्वरूपाद्यर्थालङ्काराणां निरूपणं तल्लक्षणं च। ३४५ तमेऽध्याये प्रशस्त्यादीनां षण्णामर्थालङ्काराणां कथनम्। ३४६ तमेऽध्याये गुणलक्षणं तद्-भेदोपभेदा विशेषगुणाश्च वर्णिताः। ३४७ तमेऽध्याये दोषलक्षणपुरस्सरं दोषस्य सप्तप्रकाराः कथिताः। पदवाक्यगता दोषा, असिद्धत्वादीनां गूढार्थतादीनां च दोषाणां परिहारोऽप्यत्र दर्शितः।

इतरपुराणानामिवास्य पुराणस्यापि रचनाकालविषये विदुषां मतं नैकमत्याय प्रकल्पते। वस्तुतोऽन्यपुराणानामिवास्य पुराणस्यापि विभिन्नभागानां रचना विभिन्नेषु कालेष्वजायत। अतएवेदानींतनस्याग्निपुराणस्य को भागः प्रत्नः कश्च नूतन इति निर्णेतुं दुष्करम्। तथापि बहुभिर्विद्वद्भिरस्य पुराणस्य रचना-कालविषये स्वविचाराः प्रदर्शिताः।

विलसनमहाभागेनास्य विविधविषयाणां रचना सङ्कलनं च विभिन्नेषु कालेष्वजायतेति मतम्।[1] एष ग्रन्थः केनचिदविदितनाम्ना ग्रन्थकारेण निरमा-यीति एस० के० देमहोदयो मन्यते।[2] डा० विण्टरनिट्ज़मतेनैष विलक्षणः कोश उतास्य विभिन्नभागाः कतमेन समयविशेषेण सह सम्बद्धा इति वक्तुम-

१. H. H. Wilson : Agni Purāṇa (English Translation), Introduction, p. 6

२. S. K. De : The History of Sanskrit Poetics, Vol. II, p. 254

शक्यम् ।[1] श्री एम० एन० दत्ताख्यविदुषाऽयं विश्वकोशः कदाऽलिख्यतेति वक्तुं दुष्करं परं नियतमेवेयं रचनेस्लाममतप्रसारकाणां भारतस्योपरि विहितादाक्रमणाद् बहुकालपूर्वमलेखीति मतम् ।[2] डा० एफ० ई० पार्जिटरनाम्ना सुधियाऽस्य कालो नवमात्क्रैस्ताब्दादुत्तरवर्त्तीत्यङ्गीकृतम् ।[3]

अथ पूर्वं तावदग्निपुराणस्यालङ्काराणां रचनाकालविषये विचारो विधीयते । डा० पी० वी० काणेमहोदयेन पुराणस्यास्यालङ्कारभागस्य कालविषये सविस्तरं व्यचारि । इदानीं तन्मतं संक्षेपेणात्र प्रस्तूयते ।[4]

(१) अग्निपुराणं रामायणस्य सप्तकाण्डानि, हरिवंशं पिङ्गलं पालकाप्यं शालिहोत्रं धन्वन्तरिं सुश्रुतं च निर्दिशति । भगवद्गीताया अष्टोत्तरपञ्चाशच्छ्लोकानामर्धांशा अप्यस्मिन् (३८०तमेऽध्याये) सङ्गृहीताः । ३५६ तमादध्यायादारभ्य ३६६ तमाध्यायं यावद् बहवोऽमरकोशस्य श्लोका अवैकल्येनास्मिन् समावेशिताः । इमे सर्वे ग्रन्था अग्निपुराणात्सामग्रीमगृह्णन्निति तु नानुमीयते, यतो ह्यग्निपुराणे कस्यापि सम्प्रदायविशेषस्य विषयविशेषस्य वा सर्वाङ्गीणो विचारो न दृश्यते, परं ग्रन्थस्यास्य निर्माणसमये ये खलु विषयाः सम्प्रदाया वाऽऽसन् तेषामत्र संक्षेपेण विस्तरेण वा सङ्कलनाय प्रयासोऽकारीति प्रतीयते । भाषाया विषयाणां च परीक्षया रामायणादिग्रन्थेभ्योऽस्य पुराणस्योत्तरवर्तित्वं ज्ञायते ।

(२) भारती रीतिर्हि भरतेन प्रख्यापितेति पुराणेऽस्मिन् लिखितम् ।[5] यदि भरतो मुनिरग्निपुराणात्पूर्वं नाभविष्यत्तर्हि कथमग्निपुराणस्य कर्त्ता भरतेन प्रणीतत्वादिति लेखितुमशक्ष्यत् । अस्माद् भरतमुनेः समयोऽग्निपुराणात् प्रागासीदित्यवगम्यते । अपरञ्चाग्निपुराणस्य 'विद्यासारं यद्विदित्वा सर्वज्ञो जायते नर'[6] इति प्रतिज्ञाप्यस्य सङ्कलनप्रवृत्तिं निर्दिशति । कश्चिदपि ग्रन्थो विद्यासारं तु विविधेभ्यो ग्रन्थेभ्य एव गृह्णाति ।

(३) रूपकोत्प्रेक्षाविशेषोक्तिविभावनाऽपह्नुतिसमाधीनामलङ्काराणामग्नि-

---

१. Winternitz : The History of Indian Literature, Vol. I, p. 566

२. M. N. Dutt : Agni Purāṇa (English Translation), Introduction, p. 5, Calcutta 1901

३. Pargiter : Ancient Indian Historical Tradition, p. 80

४. P. V. Kane : The History of Sanskrit Poetics, pp. 5-9

५. भरतेन प्रणीतत्वाद् भारती रीतिरुच्यते । अग्निपु०, ३४०, ६

६. तत्रैव १, १२

पुराणवर्णितलक्षणानि दण्डिकृतकाव्यादर्शलक्षणैः सह प्रायशः संवदन्ति ।[1] दण्डिनः समयः सप्तमक्रैस्तशतकदेशीय इति स्वीक्रियते । यथाग्निपुराणेन दण्डिनोऽनुकृतिर्विहिता तर्हि पुराणमेतत्सप्तमात्क्रैस्तशतकादनन्तरं व्यरचि ।

(४) रूपकाक्षेपाप्रस्तुतप्रशंसासमासोक्तिपर्यायोक्तानामलङ्काराणामग्निपुराणे भामहकृतकाव्यालङ्कारे च प्रायशः समानानि रूपाणि ।[2] भामहः स्वनिर्मिते काव्यालङ्कारे ग्रन्थे मया स्वयमेवैतेषामलङ्काराणां लक्षणान्युदाहरणानि च कल्पितानीति

---

१. (१) रूपकम्—(कः) उपमैव तिरोभूतभेदा रूपकमेव वा । अग्निपु० ३४४, २३
(खः) उपमैव तिरोभूतभेदा रूपकमुच्यते । काव्याद० २, ६६

(२) उत्प्रेक्षा—(कः) अन्यथोपस्थिता वृत्तिश्चेतनस्येतरस्य च ॥
अन्या मन्यते यत्र तामुत्प्रेक्षां प्रचक्षते ।। अग्निपु० ३४४, २४-२५
(खः) अन्यथैव स्थिता वृत्तिश्चेतनस्येतरस्य वा ।
अन्यथोत्प्रेक्ष्यते यत्र तामुत्प्रेक्षां विदुर्यथा ॥ काव्याद० २, २२१

(३) विशेषोक्तिः (कः) गुणजातिक्रियादीनां यत्र वैकल्यदर्शनम् ।
विशेषदर्शनायैव सा विशेषोक्तिरुच्यते । अग्निपु० ३४४, २६-२७
(खः) गुणजातिक्रियादीनां यत्तु वैकल्यदर्शनम् ।
विशेषदर्शनायैव सा विशेषोक्तिरिष्यते ॥ काव्याद० २, ३२३

(४) विभावना (कः) प्रसिद्धहेतुव्यावृत्या यत्किञ्चित्कारणान्तरम् ।
यत्र स्वाभाविकत्वं वा विभाव्यं सा विभावना ॥
अग्निपु० ३४४, २७-२८
(खः) प्रसिद्धहेतुव्यावृत्त्या यत्किञ्चित्कारणान्तरम् ।
यत्र स्वाभाविकत्वं वा विभाव्यं सा विभावना । काव्याद० २,१९९

(५) अपह्नुतिः-(कः) अपह्नुतिरपह्नुत्य किञ्चिदन्यार्थसूचनम् । अग्निपु० ३४५, १८
(खः) अपह्नुतिरपह्नुत्य किञ्चिदन्यार्थदर्शनम् ॥ काव्याद० २, ३०४

(६) समाधिः—(कः) अन्यधर्मस्ततोऽन्यत्र लोकसीमानुरोधिना ।
सम्यगाधीयते यत्र स समाधिरिह स्मृतः ॥ अग्निपु० ३४५, १३
(खः) अन्यधर्मस्ततोऽन्यत्र लोकसीमानुरोधिना ।
सम्यगाधीयते यत्र स समाधिः स्मृतो यथा ॥ काव्याद० १, ९३

२. (१) रूपकम् (कः) उपमानेन यत्तत्त्वमुपमेयस्य रूप्यते ।
गुणानां समतां दृष्ट्वा रूपकं नाम तद्विदुः ॥ अग्निपु० ३४४, २२
(खः) उपमानेन यत्तत्त्वमुपमेयस्य रूप्यते ।
गुणानां समतां दृष्ट्वा रूपकं नाम तद्विदुः ॥ काव्याल० २, २१

(२) आक्षेपः (कः) प्रतिषेध इवेष्टस्य यो विशेषोऽभिधित्सया ।
तयाक्षेपं ब्रुवन्त्यत्र······ अग्निपु० ३४६, १५-१६

प्रतिश्रुतवान्।[1] अनेन भामहस्याप्यग्निपुराणस्य रचयितुः प्रागेव स्थितिरासीदिति प्रतीयते। यदि भामहस्य समयः सप्तकस्य क्रैस्तशतकस्योत्तरार्धे मन्यते तर्ह्यस्य पुराणस्य समयस्तत्पश्चाद्वर्तिनि समये भवितुमर्हति।

(५) सरस्वतीकण्ठाभरणे भोजराजेन शृङ्गारस्य रसाभिमानाहङ्कारा इति त्रयोऽपरे पर्यायाः प्रोक्ताः। तत्र च शृङ्गारस्यैकरसत्वमपि प्रतिपादितम्।[2] शृङ्गारप्रकाशस्यैकादशेऽध्यायेऽस्य रसस्य सविस्तरं वर्णनम्। सरस्वतीकण्ठाभरणे शृङ्गाररसस्य यत् स्वरूपमुपलभ्यते तेन सहाग्निपुराणोक्तशृङ्गाररसस्वरूपं भृशं संवदति।[3] परमग्रतोऽग्निपुराणेनापीतरकाव्यशास्त्रीयग्रन्थैरिव नाट्यशास्त्रप्रतिपादिता अष्टौ

---

(खः) प्रतिषेध इवेष्टस्य यो विशेषाभिधित्सया।
आक्षेप इति तं सन्तः शंसन्ति द्विविधं यथा॥
काव्याल० २, ६८

(३) अप्रस्तुतप्रशंसा (कः) अधिकारादपेतस्य वस्तुनोऽन्यस्य या स्तुतिः॥
अग्निपु० ३४५, १६

(खः) अधिकारादपेतस्य वस्तुनोऽन्यस्य या स्तुतिः।
अप्रस्तुतप्रशंसेति सा चैवं कथ्यते॥ काव्याल० ३,२९

(४) समासोक्तिः (कः) यत्रोक्तं गम्यतेऽन्योऽर्थस्तत्समानविशेषणः।
सा समासोक्तिरुदिता संक्षेपार्थतया बुधैः॥
अग्निपु० ३४५,१७

(खः) यत्रोक्ते गम्यतेऽन्योऽर्थस्तत्समानविशेषणः।
सा समासोक्तिरुद्दिष्टा संक्षिप्तार्थतया यथा॥
काव्याल० २,७९

(५) पर्यायोक्तं (कः) पर्यायोक्तं यदन्येन प्रकारेणाभिधीयते॥ अग्निपु० ३४५, १८

(खः) पर्यायोक्तं यदन्येन प्रकारेणाभिधीयते॥ काव्याल० ३, ८

१. (कः) स्वयं कृतैरेव निदर्शनैरियं
मया प्रक्लृप्ता खलु वागलङ्कृतिः॥ काव्याल० २, ९६

(खः) गिरामलङ्कारविधिः सविस्तरः
स्वयं विनिश्चित्य धिया मयोदितः॥ काव्याल० ३, ५८

२. रसोऽभिमानोऽहङ्कारः शृङ्गार इति गीयते॥ सरस्वतीक० ५, १

३. आद्यस्तस्य विकारो यः सोऽहङ्कार इति स्मृतः।
ततोऽभिमानस्तत्रेदं समाप्तं भुवनत्रयम्॥
अभिमानाद्रतिः सा च परिपोषमुपेयुषी।
व्यभिचार्यादिसामान्याच्छृङ्गार इति गीयते॥ अग्निपु० ३३९, ३-४

नव वा रसा मताः ।[1] अनेनात्र शृङ्गाररसस्य प्राधान्यमपास्यते । अग्निपुराणस्यासम्बद्धान् कतिपयश्लोकानाश्रित्य भोजराजेन सरस्वतीकण्ठाभरणशृङ्गारप्रकाशाख्यग्रन्थयोर्बहवो विचाराः पल्लविता उत वा किञ्चित्परिवर्तनमविधायैव सङ्कलिता इति विश्वसितुं न पार्यते । अग्निपुराणस्य द्वयोरध्याययोः पाञ्चालीवैदर्भीगौडीलाटीया इति चतस्रो रीतयो वर्णिताः ।[2] एतासां रीतीनां स्वरूपं भोजस्य शृङ्गारप्रकाशाख्यग्रन्थे निरूपितानां रीतीनां स्वरूपेण सह भृशं सङ्गच्छते । अग्निपुराणे प्रायशो मौलिकविचाराणामभावः सङ्ग्राहकप्रवृत्तिश्च विलोक्यते । अस्मादग्निपुराणेन यथाऽन्येभ्यो ग्रन्थेभ्यो विभिन्नविषया उपात्तास्तथैव रीतिविषया सामग्री शृङ्गारप्रकाशाद् गृहीतेत्यनुमानमनुपपन्नं न प्रतीयते । यद्येतत् स्वीक्रियते तर्ह्यग्निपुराणस्यास्य भागस्य कालो भोजस्य कालात् (प्रायः १००५-१०५४ के० स० इ०) उत्तरवर्ती स्यात् ।

स्वकीयं मतमुपसंहरन् काणेमहोदय इदमभिदधाति—"The forgoing discussion goes to establish that the Agni Purāṇa is later than the 7th century at least and that the section on Poetics was compiled about or a little after 900 A. D. and probably after 1050 A. D."[3] । एवं काणेमहोदयेनाग्निपुराणस्य काव्यशास्त्रीयभागस्य समयो नवमक्रैस्तशतकदेशीय उत वाऽस्मात् किञ्चित्कालानन्तरवर्तीति मतम् । कदाचिदयं भागः १०५० तमात्क्रैस्ताब्दादनु विरचित इत्यपि तेनानुमीयते ।

परमग्निपुराणं कदाचिद् भोजस्य सरस्वतीकण्ठाभरणादनन्तरमेकादशे क्रैस्तशतके व्यरच्यतेति मतं डा० एस० के० देमहाभागो नाङ्गीकुरुते । (Indian Historical Quarterly, X, No. 4, 1934, p. 767 f.)—इत्याख्यपत्रिकायां प्रकाशितैः डा० वी० राघवनमहोदयस्य विचारैः सह विसंवदता तेनाग्निपुराणस्य भोजादनन्तरवर्तित्वमपास्तम् । इदानीं तन्मतं संक्षिप्यात्र प्रदर्श्यते[4]—

डा० राघवनमहोदयेनाग्निपुराणं हि भोजराजस्य सरस्वतीकण्ठाभरणाख्यरचनाया अनन्तरं व्यरचीति यत्प्रतिपादितं तत्कृते तेन प्रधानतमेयमुपपत्तिः प्रस्तुता—यतो ह्यग्निपुराणं सङ्कलनात्मको ग्रन्थः सरस्वतीकण्ठाभरणं च तदुत्सी-

---

१. तत्रैव ३३९, ८-९

२. तत्रैव ३३९, ५४, ३४०, १-४

३. P. V. Kane : The History of Sanskrit Poetics, p. 9

४. See The Poona Orientalist, edited by Dr. Har Dutt Sharma, Vol. II, No. 1, (April, 1937), pp. 15-17. (S. K. De : Date of Alaṅkāra Section of the Agnipurāṇa)

भूता कृतिरस्मात्खलु पुराणमिदं सरस्वतीकण्ठाभरणादनन्तरवर्तीति। उभयोरेवानयोर्ग्रन्थयोः काव्यशास्त्रीयस्थलेषु साम्यदर्शनाद् यथाऽग्निपुराणे नाट्यशास्त्रादिग्रन्थेभ्यः सामग्री सङ्कलिता तथैव सरस्वतीकण्ठाभरणादपीत्युपकल्पयितुं समीचीनं प्रतीयते। एवमग्निपुराणस्य सङ्कलनात्मकप्रवृत्तिमत्त्वात् सरस्वतीकण्ठाभरणस्य च स्वतन्त्ररचनागुणोपेतत्वादग्निपुराणं सरस्वतीकण्ठाभरणादनु व्यरच्यतेत्येवावधारयितुं युज्यतेतराम्।

डा० राघवनमहोदयस्येदं मतं निराकुर्वन् डा० एस० के० देमहाभागवमाह—अग्निपुराणसरस्वतीकण्ठाभरणयोरुभयोरेव ग्रन्थयोर्नाट्यशास्त्रात्काव्यादर्शाच्च प्रचुरा सामग्री सङ्कलिता। अस्मात् सरस्वतीकण्ठाभरणं स्वतन्त्रकृतिरूपेण नाङ्गीकर्तुं शक्यते। एतत्सर्वं सविस्तरं सोपपत्तिकं च ख्यापयन् देमहोदयः स्वलेखमेवमुपसंहरति—

१. उभयोरेव ग्रन्थयोर्नाट्यशास्त्रादिभ्यः सामग्री सङ्कलिता। अतएवोभयोरेव स्वरूपं सङ्कलनात्मकम्।
२. विभिन्नविचाराणामुभयोरेव सङ्कलनं दृश्यते परं नैतत्कार्यमालोचनात्मकरीत्या सम्पन्नम्।
३. उभाभ्यामेवैका नवीनाद्भुता च विचारसरण्यवलम्बिता या खलु परम्परागतविचारैर्न सङ्गच्छते।
४. भोजेन सरस्वतीकण्ठाभरणे काव्यशास्त्रस्य प्रतिपादनं सावधानतयासुव्यवस्थितप्रकारेण च विहितम्। अग्निपुराणस्य सरस्वतीकण्ठाभरणस्य च ये सामान्याः (उभयनिष्ठाः) विषयास्ते सरस्वतीकण्ठाभरणे भूयसा विस्तरेणोपलभ्यन्ते। (अग्निपुराणस्य विचारा अव्यवस्थिताः संक्षिप्ताश्च। एत एव सरस्वतीकण्ठाभरणे परिष्कृतस्वरूपमवाप्नुवन्नित्युपकल्पनमनुपपन्नं न प्रतीयते)। अनेनाग्निपुराणात् सरस्वतीकण्ठाभरणमुत्तरकालिकमिति समधिकं प्रतिभाति।

एवं देमहोदयोऽग्निपुराणं सरस्वतीकण्ठाभरणान्नोत्तरवर्तीति मतमभिव्यनक्ति। एतस्य पुराणस्य कालविषये विमृशन् स्वकीये संस्कृतकाव्यशास्त्रस्येतिहासाख्यग्रन्थेऽसावेवमभिदधाति—

सङ्ग्राहकप्रवृत्तिमतः सकलस्याग्निपुराणस्य कोऽपि कालः स्यात् परं पूर्वप्रदर्शितेन तुलनात्मकेनाध्ययनेनैतत्पुराणवर्तिकाव्यशास्त्रीयभागस्य समयो नवमक्रैस्तशतकादनन्तरवर्ती न प्रतीयत इति।[1]

---

१. Whatever may be the date of the Purana as a whole, which is a kind

एवं पी० वी० काणे, डा० एस० के० देमहाभागाभ्यामस्य पुराणस्य काव्यशास्त्रीयभागस्य रचनाकालो नवमक्रैस्तशतकस्योत्तरार्धमिति स्वीकृतम् ।

## २. विष्णुपुराणम्

अस्मिन् पुराणे भगवतो विष्णोर्गुणाः सविशेषमाख्याताः । शिवब्रह्माणौ तदंशभूतौ प्रकीर्तितौ । अस्य सर्गस्य ब्रह्मविष्णुशिवा इमे त्रयो देवाः कर्तृधर्तृहर्तारः । वस्तुतो भगवान् जनार्दन एव त्रयाणां देवानां रूपाण्याधाय सृष्टिस्थितिप्रलयरूपं त्रिविधं कार्यं कुरुते ।[1] अत्र पुराणेऽष्टादशपुराणानां नामान्यपि सङ्ख्यातानि ।[2] अस्य पुराणस्य वर्तमानसंस्करणेषु षडंशा विलोक्यन्ते । सप्तमादंशाद्विष्णुधर्मोत्तरपुराणस्यारम्भः । एवमिदमुपपुराणं विष्णुपुराणस्यैवाङ्गमिति विद्वांसो मन्यन्ते । विष्णुपुराणस्य श्लोकानां संख्या विष्णुधर्मोत्तरपुराणस्य श्लोकैः सह संभूय १६००० जायते । अस्य पुराणस्य सर्वे षडंशाः पुराणस्य पञ्चलक्षणनियमेन सह सर्वथा सङ्गच्छन्ते यतो ह्येषु सर्गादयः पञ्चविषयाः क्रमेण वर्णिताः । अपरञ्च पुराणस्य पञ्चलक्षणात्मकं लक्षणमप्यत्रोपलभ्यते ।[3] अस्य पुराणस्य षण्णामंशानां प्रधानतमा विषया अधोलिखिताः—

---

of an ambitious encyclopaedia, incorporating sections on various departments of knowledge, we may, from what has been said, be justified in assigning the Alaṅkāra-section to a period later than the middle of the 9th century. (S. K. De : History of Sanskrit Poetics Vol. I, p. 99)

१. सृष्टिस्थित्यन्तकरणीं ब्रह्मविष्णुशिवात्मिकाम् ।
स संज्ञां याति भगवानेक एव जनार्दनः ॥ विष्णुपु० १, २, ६६

२. ब्राह्मं पाद्मं वैष्णवं च शैवं भागवतं तथा ।
तथान्यं नारदीयं च मार्कण्डेयं च सप्तमम् ॥
आग्नेयमष्टमं चैव भविष्यन्नवमं स्मृतम् ।
दशमं ब्रह्मवैवर्तं लैङ्गमेकादशं स्मृतम् ॥
वाराहं द्वादशं चैव स्कान्दं चात्र त्रयोदशम् ।
चतुर्दशं वामनं च कौर्मं पञ्चदशं तथा ॥
मात्स्यं च गारुडं चैव ब्रह्माण्डं च ततः परम् ।
महापुराणान्यैतानि ह्यष्टादश महामुने ॥ भागवतपु० ३, ६, २१-२४

३. सर्गश्च प्रतिसर्गश्च वंशमन्वन्तराणि च ।
सर्वष्वैतेषु कथ्यन्ते वंशानुचरितं च यत् ॥ विष्णुपु० ३, ६, २५

१. प्रथमोंऽशः—अत्र स्थावरादिसृष्टिर्ब्राह्मणादिसर्गा इन्द्रदुर्वाससोः कथा, समुद्रमन्थनं भृगुवंशवर्णनं, ध्रुवकथा, ध्रुववेनवंशौ पृथुप्रह्लादादीनां च वृत्तानि ।

२. द्वितीयोंऽशः—अस्मिन् सृष्टेर्विस्तारो लयः पुनरुत्पत्तिश्च, प्रियव्रतकथा, भरतवंशविस्तरो भूमण्डलवर्णनं भारतवर्षनिरूपणं प्लाक्षादिद्वीपवर्णना, जडभरतकथा, ऋभुनिदाघसंवादादयश्च विषयाः ।

३. तृतीयोंऽशः—अत्र मनुवंशवर्णनम्, यजुस्साम्नोः शाखा अष्टादशपुराणानि, चतुर्दशविद्या यमगीता, चतुवर्णाश्रमसंस्कारश्राद्धादीनां च वर्णनम् ।

४. चतुर्थोंऽशः—अत्र मनुवंशः, सगरवंशो रामादिजन्म, सीताया उत्पत्तिः, पुरुरवसो वंशश्चन्द्रवंशः, कृष्णचरितं यदुतुर्वसुद्रुह्युपुर्वनुकुविंद्वाकुनन्दप्रभृतयो वंशा वर्णिताः ।

५. पंचमोंऽशः—भगवतः कृष्णस्य जन्मन आरभ्य स्वर्गगमनपर्यन्तं सर्वं वृत्तं सविस्तारमाख्यातम् । यदुवंशसंहारः परीक्षिद्राज्याभिषेकः पाण्डवानां स्वर्गारोहणं चात्र वर्णितम् ।

६. षष्ठोंऽशः—अत्र कलिधर्मनिरूपणं प्रलयवर्णनमाध्यात्मिकादितापत्रयकथनं ब्रह्मयोगनिर्णयो विष्णुपुराणमाहात्म्यादयो विषयाः समाख्याताः ।

एवमस्मिन् पुराणे सर्वे षडंशाः पुराणस्य पञ्चलक्षणात्मकं क्रममाश्रित्य विनिर्मिताः । अनेनेदं पुराणमेकस्मिन्नेव काले केनचिदेकेनैव विदुषा सम्पादितमिति प्रतीयते । अन्येषां केषाञ्चित् पुराणानामिवास्य पुराणस्यापि रचनाकालविषये सन्त्यनेका विप्रतिपत्तयो विदुषां मध्ये । डा० राजेन्द्रचन्द्रहाज़रामहोदयेन विभिन्नविदुषां मतानि प्रदर्श्यास्य रचनाकालविषये भृशं व्यमर्शि ।[1] तदाश्रित्यात्र सूक्ष्मेक्षिकया विचार्यते ।

पार्जिटरमतेनेदं पुराणमन्यपुराणेभ्य उत्तरकालवर्ती पूर्वविचारितक्रमविशेषं चानुरुध्य लिखितम् । यथा वायुब्रह्ममत्स्यपुराणेषु विविधविषया विभिन्नेषु कालेषु सङ्कलिता न तथाऽस्मिन् पुराणे । अत्र पुराणे खल्वेकस्मिन् कालविशेषे वर्ण्यविषया यथाविध्येकत्र सन्निहिताः । बौद्धजैनधर्मयोर्वर्णनमप्यत्र दृश्यते । अतएवेदं ब्राह्मणधर्मस्य पुनरुत्थानसमयात् पञ्चमक्रैस्तशतकान्न पूर्वतरमिति ज्ञायते ।[2]

---

१. Annals of the Bhandarkar Oriental Research Institute (Dr. Rajendra Chandra Hazra : 'The date of the Viṣṇu Purāṇa'), Vol. XVIII, 1937, pp. 265-269

२. Pargiter : Ancient Indian Historical Tradition, p. 80

जे० एन० फर्क्हराख्यसुधियो मतमिदम्—हरिवंशपुराणस्य समयश्चतुर्थात्क्रैस्तशतकादुत्तरवर्ती न भवितुमर्हति। विष्णुपुराणस्य बहूनां सन्दर्भाणां हरिवंशपुराणस्य सन्दर्भैः सह सादृश्यमतएवोभयो रचनाकालः समान एव प्रतीयते।[१] विष्णुपुराणं पञ्चात् क्रैस्तशतकात् पूर्वतरमिति पार्जिटरमतमुपपन्नं स्यात्तथापि पुराणमिदं नास्मात्कालादुत्तरकालिक इति विण्टरनिट्ज़महाभागस्य मतम्।[२]

विष्णुभागवतहरिवंशपुराणानां तुलनात्मकेनाध्ययनेन विष्णुपुराणस्य रचनाकालविनिर्णये भृशं साहाय्यं प्राप्यते। पूर्वं तावद्विष्णुभागवतपुराणयोः प्रतिपाद्यविषयाणां विषये विचारो विधीयते। एतयोरनेकेषु विषयेषु परस्परं सादृश्यम्। विष्णुभागवतपुराणयोः शब्दबोध्योऽप्यर्थः समानः[३] [भगवान् श्रीमान् (विष्णुः) तस्येदं पुराणं भागवतपुराणम्—विष्णुपुराणम्]। पुराणद्वयोपलब्धवंशावलीभागानां तुलनात्मकमध्ययनं विधाय पार्जिटरनामा सुधीर्भागवतपुराणे विष्णुपुराणसामग्र्या उपयोगो विहित इति निश्चिनोति।[४] ध्रुववेनपृथुप्रह्लादजडभरतादिविषयिण्यो बहवः कथा विष्णुपुराणे संक्षिप्ता अविकसितस्वरूपाश्च। इमाः खलु भागवतपुराणे यथेष्टं विकासं परिवर्धनं चालभन्त। भागवतपुराणस्य दशमे स्कन्धे कृष्णचरितस्य वर्णनम्। एतद्धि विष्णुहरिवंशपुराणयोर्वर्णनात् पृथुतरम्। गोपीभिः सार्धं विहितानां कृष्णस्य प्रेमलीलानां चात्र सविस्तरवर्णनम्।[५] अनेन हि विष्णुपुराणं भागवतपुराणात् पूर्वतरमिति प्रतीयते। यदि भागवतस्य समयः षष्ठे क्रैस्तशतके स्वीक्रियेत तर्हि विष्णुपुराणस्य रचनाकाल एतस्मात् कालात् पूर्वतरो भवेत्।

हरिवंशपुराणेऽपि कृष्णस्य चरितमतिविस्तरेण वर्णितम्। इदं वर्णनं विष्णुपुराणवर्णनाद्विपुलतरम्। जरासन्धस्य पारिजातहरणादीनां कतिपयाः कथा हरिवंशपुराणे सुविकसितस्वरूपा दृश्यन्ते। अनेन हरिवंशपुराणाद्विष्णुपुराणस्य पूर्ववर्तित्वं ज्ञायते। यदि हरिवंशपुराणस्य रचनाकालश्चतुर्थक्रैस्तशतकदेशीयो निश्चीयेत तर्हि विष्णुपुराणस्य समयश्चतुर्थक्रैस्तशतकस्य मध्यभागात्पश्चात्कालिको भवितुमर्हति। इयं हि विष्णुपुराणस्योत्तरसीमा।[६]

---

१. Farquhar : Outline of the Religious Literature of India, p. 143

२. Winternitz : History of Indian Literature, Vol. I, p. 545, footnote 2

३. Ibid., p. 555

४. The Bhāgavata has used the Viṣṇu in its composition. (Pargiter : Ancient Indian Historical Tradition, p. 80)

५. Winternitz : History of Indian Literature, p. 557

६. Annals of the Bhandarkar Oriental Research Institute, Poona, Vol. XIV, 1932-33, p. 182 fn.

विष्णुपुराणस्यानेकेषु स्थलेषु मेषादिराशीनां राशिशब्दस्य च प्राचुर्येण प्रयोगः ।[1] अनेन विष्णुपुराणस्य रचनासमये जनानां राशिविषयकज्ञानवैपुल्यं द्योत्यते ।

आदिमवाङ्मयादारभ्य याज्ञवल्क्यस्मृतिकालं यावद्विद्वांसस्तिथिग्रहनक्षत्राणि त्वजानन् परं न ते राशीनधिकृत्य किमप्यवेदिषुः । यतो ह्येतत्कालान्तर्वर्तिनि वाङ्मये राशिशब्दस्य प्रयोगो न कुत्रापि लक्ष्यते । याज्ञवल्क्यस्मृतावपि (द्वितीये क्रैस्तशतके) ग्रहयज्ञविधिप्रकरणे सूर्यादिग्रहाणां तु वर्णनं परं न तत्र राशीनां कोऽपि संकेतः ।[2] अनेन याज्ञवल्क्यस्मृतिसमये राशीनां विषये लोकाः किञ्चिज्जज्ञुरनन्तरं च तज्ज्ञानं विष्णुपुराणसमये वृद्धिं जगामेत्यनुमातुं शक्यते । एवमेव विष्णुपुराणप्रयुक्तो होरेतिशब्दो विचारार्हः । वराहमिहिरेण (५५० तमः क्रैस्ताब्दः) गर्गाद् द्वौ श्लोकावुद्धृतौ तत्र होरेति शब्दस्य प्रयोगः ।[3] परं प्रथम-क्रैस्तशतकसमाप्तिपूर्वमस्य प्रयोगो न कुत्रापि विलोक्यते । अतो राशिहोराशब्द-योरनेन निर्देशेन विष्णुपुराणं प्रथमात् क्रैस्तशतकात् पूर्वं न व्यरच्यतेति ज्ञायते । एवं विष्णुपुराणस्य रचनाकालः प्रथमस्य क्रैस्तशतकस्य समाप्तिकालादारभ्य चतुर्थक्रैस्तशतकस्य मध्यभागं यावदासीदिति प्रतीयते ।

## ३. मार्कण्डेयपुराणम्

एतद्धि पुराणमृषिणा मार्कण्डेयेन (क्रौष्टुकिं शिष्यं प्रति) प्रोक्तत्वान्मार्क-ण्डेयपुराणमिति नाम्ना प्रसिद्धम् ।[4] अत्र श्लोकानां ६९०० इति संख्या

---

१. करोत्यहस्तथा रात्रिं विमुञ्चत् मेदिनीं द्विज ।
अयनस्योत्तरस्यादौ मकरं याति भास्करः ॥
ततः कुम्भं च मीनं च राशे राश्यन्तरं द्विज ।
त्रिष्वेतेष्वथ भुक्तेषु ततो वैषुवतीं गतिम् ॥ विष्णुपु० २,८, ३०-३१

षडेव राशीन् यो भुङ्क्ते रात्रावन्यांश्च षड् दिवा ।
राशिप्रमाणजनिता दीर्घह्रस्वात्मता दिवे ॥
तथा निशायां राशीनां प्रमाणैर्लघुदीर्घता ।
दिनादेर्दीर्घह्रस्वत्वं तद्भोगेनैव जायते ॥ तत्रैव २,८, ४६-४७

विषुवे चापि सम्प्राप्ते ग्रहणे शशिसूर्ययोः ।
समस्तेष्वेव भूपाल राशिष्वर्के च गच्छति ॥ तत्रैव ३, १४, ५

२. याज्ञवल्क्यस्मृतिः १, ११

३. बृहत्संहिता १, ९-१०

४. कथिता मुनिना पूर्वं मार्कण्डेयेन धीमता ॥ मार्कण्डेयपु० १३४, ३९

प्रोक्ता ।[1] नैतत्पुराणं केनचित्सम्प्रदायविशेषेण सह सम्बद्धम् । अत्र १३४ अध्यायास्तेषु च मुख्यतमा इमे विषयाः —द्रौपदीकथा, हरिश्चन्द्रोपाख्यानम्, पितृपुत्रसंवादो देवादिविविधसृष्टिकथनं, जम्बूद्वीपादिवर्णनं स्वारोचिषौत्तमतामसरैवतचाक्षुषवैवस्वतसावर्णिकरौच्यभौत्यमन्वन्तराणां विवरणं देवीमाहात्म्यं वंशानुकीर्तनं च ।

अस्य पितृपुत्रसंवादनाम्नः प्रसङ्गस्य षट्चत्वारिंशदध्यायेषु (१०-४४ अध्यायाः) प्राणिनामुत्पत्तिक्रमो नरकविवरणं नरकयातनावर्णनं पतिव्रतामाहात्म्यं मदालसाकथा राजधर्मकथनं वर्णाश्रमकीर्तनं श्राद्धसदाचारवर्ज्यावर्ज्यकथनं योगविद्या, प्राकृतवैकृतसृष्टिवर्णनं च। देवीमाहात्म्यप्रसङ्गे च मधुकैटभमहिषधूम्रलोचनचण्डमुण्डरक्तबीजशुम्भनिशुम्भवधवर्णनं देवीस्तोत्रं च । वंशानुकीर्तने च राज्यवर्धनपूषध्ननाभागखनित्रविविंशखनिनेत्रकरन्धमावीक्षितमरुत्तनरिष्यन्तदमाख्यनृपतीनां चरितानि ।

अस्य पुराणस्य रचना कदा बभूवेति विषये विण्टरनिट्ज़महोदयस्य मतमाश्रित्य विचारो विधीयते । इदं हि पुराणं वर्तमानेषु पुराणेषु रोचकतमं पुरातनतमं च । अत्राप्यन्यपुराणेष्विव विषयवैविध्यं दृश्यते। इमे च विभिन्ना विषया विभिन्नेषु कालेषु निरमीयन्तेति प्रतीयते । क्रौष्टुकिमभिलक्ष्य मार्कण्डेयेन प्रोक्ता अंशाः (४५-८१ अध्यायाः, ९३-१३४ अध्यायाः) पुरातनतमा इति ज्ञायते । एष्वध्यायेषु प्रायशः पुराणेषूपलभ्यमानाः सृष्टिवर्णनसर्गकालवंशावलीसदृशा विषया वर्णिताः । अस्मिन् पुराणेऽग्निसूर्यादिवैदिकदेवानां विभिन्नेष्वध्यायेषु वर्णनम् । सूर्यदेवविषयिण्योऽनेका गाथा अप्यत्रोपलभ्यन्ते । इन्द्रब्रह्मणोरपि सविशेषं वर्णनं दृश्यते, परं नात्र शिवविष्णवोः किमपि स्थानवैशिष्ट्यम् । सम्प्रदायविशेषेण सहेदमेव निरपेक्षत्वमस्य प्रत्नतमत्वस्याभिसूचकम् । अस्य पुराणस्य राजवंशानुकीर्तनपरा द्वादशाध्यायाः (८९-१००) पुरातनतमा इति पार्जिटरमतमङ्गीकुर्वता विण्टरनिट्ज़महोदयेनेमेऽध्याया अस्मात्कालादपि पूर्ववर्तिनो भवितुमर्हन्तीति प्रतिपादितम् ।[2]

देवीमाहात्म्याभिधो भागः (७८-९०) अस्मिन्पुराणे पश्चात्संयोजित इति प्रतीयते । अस्य समयः षष्ठक्रैस्तशतकादुत्तरं न भवितुं युज्यते । एवमस्य पुराणस्य रचनाकालस्तृतीयक्रैस्तशतकादथवैतस्मात्कालात्किञ्चित्पूर्ववर्तिनः कालादारभ्य क्रैस्तशतकं यावदनुमीयते ।[3]

---

१. श्लोकानां षट्सहस्राणि तथा चाष्टशतानि च ।
श्लोकास्तत्र नवाशीतिरेकादश समाहिताः ॥ तत्रैव १३४, ३८-३९

२. Winternitz : The History of Indian Literature, Vol. I, pp. 559-560

३. Ibid., p. 565

## ४. भागवतपुराणम्

इदं पुराणं वैष्णवसम्प्रदायेन सह सम्बद्धम्। भगवत इदं साऽस्य देवता वेति भागवतस्य व्युत्पत्तिनिमित्तोऽर्थः।[1] भगवान् (=श्रीमान्) इति भगवतो विष्णोर्नाम तत्सम्बन्धादस्य पुराणस्यापि भागवतमिति नाम। अस्मिन् पुराणे द्वादश-स्कन्धाः। तेषु चाष्टादशसहस्राणि श्लोकाः। सृष्ट्युत्पत्तिविषयिण्यः कथा विष्णु-पुराणेन सह सर्वथा संवदन्ति क्वचिदेव तास्वल्पीयान् विसंवादः। ध्रुवप्रह्लादादीनां कतिपयाः कथा विष्णुपुराणोक्तकथाभिः सह भृशं सादृश्यं भजन्ते। अस्य द्वादशा-ध्यायानां विषयाणां संक्षेपेण वर्णनमधस्तात् प्रस्तूयते—

**प्रथमः स्कन्धः**—अत्र भागवतमाहात्म्यं विष्णोरवतारा, द्रौपदीपुत्राणाम-श्वत्थाम्नश्च कथा, भगवतः कृष्णस्य द्वारकागमनं, परीक्षित्कथा च।

**द्वितीयः स्कन्धः**—अस्मिन् ध्यानविधिर्ब्रह्मणः स्थूलसूक्ष्मस्वरूपं, मुक्तेः स्वरूपं सृष्टिवर्णनं विराड्देहवर्णना, वराहाद्यवतारसंकीर्तनं, परीक्षित्कृतविविध-प्रश्नाः, पुराणलक्षणादिवर्णनं च।

**तृतीयः स्कन्धः**—अत्र कृष्णचरितं महदादिस्थूलसृष्टिर्मन्वन्तरादिकाल-विभागो वराहावतारश्चराचरसर्गानन्तरं स्वायंभुवमनोर्वंशवर्णनं, पुम्प्रकृत्योर्विवेक-ज्ञानमष्टाङ्गयोगविधिः, कर्मानुसारं जीवानां विविधगतयस्तत्त्वज्ञानेन देवहूत्या मोक्षपदप्राप्तिश्च।

**चतुर्थः स्कन्धः**—स्वायंभुवमनोर्वंशकथनं सतीध्रुववेनपृथुकथा, ध्रुवपृथु-वंशपरम्परा, पुरञ्जनोपाख्यानं च।

**पञ्चमः स्कन्धः**—प्रियव्रताग्नीध्रनाभ्यृषभदेवभरतचरितानि भवाटवीरूपकं तस्य वास्तवार्थकथनं, भरतवंशो भुवनकोशो मेरुकिम्पुरुषभरतखण्डवर्णनं, द्वीप-नक्षत्रग्रहशिशुमारचक्रवर्णनं, नरकगतिवर्णनं च।

**षष्ठः स्कन्धः**—अजामिलोपाख्यानं, स्वदूतैः सह यमस्य संवादो, दक्षतपसा भगवत आविर्भावो, दक्षस्य षष्ठिसंख्याकानां कन्यानां वंशवर्णनं, देवगुरुविश्वरूप-कथा, वृत्रासुरवधश्चित्रकेतुकथा, आदितेयदैत्यमरुद्गणानामुत्पत्तिः पुंसवनव्रत-विधिश्च।

**सप्तमः स्कन्धः**—अत्र हिरण्यकशिपोः प्रह्लादस्य च चरितमुपवर्ण्य नृसिंहावतारकथा, मानववर्णस्त्रीधर्माणां निरूपणं ब्रह्मचर्याद्याश्रमचतुष्टयस्य च नियमाः।

---

१. तस्येदम्। अ० ४,३,१२०; साऽस्य देवता। अ० ४,२,२४

**अष्टमः स्कन्धः**—मन्वन्तरवर्णनं गजेन्द्रमोक्षः समुद्रमन्थनकथा, देवासुरसंग्राम आगामिसप्तमन्वन्तरकथा वामनावतारो मत्स्यावतारश्च ।

**नवमः स्कन्धः**—अस्मिन् वैवस्वतमनोः सुद्युम्नपृषध्रादिपुत्राणां वंशा, ऋषिच्यवनस्य नाभागाम्बरीषयोश्च कथा, इक्ष्वाकुवंश्यमान्धातृत्रिशङ्कुहरिश्चन्द्रसगरभगीरथनृपाणामाख्यानानि, रामकथैक्ष्वाकवनृपाणां निमिचन्द्रयोश्च वंशवर्णनम्, ऋचीकजमदग्निपरशुरामचरितानि, क्षत्रवृद्धरजिप्रभृतिनृपाणां वंशवर्णनं, कुरुपुर्वनुद्रुह्युतुर्वसुयदुपाञ्चालमागधवंशानुकीर्तनं च ।

**दशमः स्कन्धः**—अस्मिन् स्कन्धे कृष्णस्य बाललीला वत्सबककंसाद्यसुरसंहारो महारासादयः कृष्णसम्बन्धिनो विविधविषयाः सविस्तरं काव्योचितरीत्या वर्णिताः ।

**एकादशः स्कन्धः**—कुपितानां मुनीनां यदुवंशाय शापो, नारदवसुदेवसंवादे मायाब्रह्मादिविषयकाव्यात्मज्ञानं, भगवतोऽवतारा अवधूतोपाख्यानानि, सांसारिकविषयाणामसारता, भक्तियोगादय आध्यात्मविषया वर्णाश्रमधर्मयमनियमज्ञानकर्मभक्तियोगादिनिरूपणं च ।

**द्वादशः स्कन्धः**—कलियुगराजवंशावल्यः, कलिधर्माश्चत्वारः प्रलयाः, परीक्षितः परमा गतिः सर्पसत्रं, वेदानां शाखाः पुराणलक्षणानि, मार्कण्डेयचरितं भागवतस्य संक्षिप्ता विषयसूची, विभिन्नपुराणानां श्लोकसंख्या भागवतमहिमा च ।

भागवतपुराणस्य रचनाकालविषये विदुषां मध्ये नैकमत्यम् । केचन विद्वांसो भागवतं बोपदेवविरचितमिति मन्यन्ते । तेषां मतं सङ्केतयन् विण्टरनिट्ज़महोदयोऽभिदधाति—एतत्पुराणं बोपदेवविरचितं न वेति प्रश्नोनेकशो विचारपदवीमायातः । कोलब्रुक-वरनफ-विलसनाख्यमहानुभावैर्बोपदेवो नियतं भागवतपुराणकर्त्तेति त्रयोदशक्रैस्तशतके ह्येतद्विनिर्मितमिति च प्रतिपादितम् ।[1] स्वकीयं मतं पोषयता तेनोक्तम् न केनापि प्रकारेणानया कृत्या पुरातनया भाव्यम् । इदं पुराणं त्रयोदशे क्रैस्तशतके पवित्रग्रन्थत्वेनामन्यत । अस्य च समयः दशमक्रैस्त-

---

१. Winternitz : The History of Indian Literature, Vol. I, p. 555. Also see footnote No. 6, i.e. : This supposition seems to rest only on the fact that Bopadeva is the author of Muktāphala, a work dependent on the Bhāgavata and of the Harilīlā Anukramaṇi (Index) to the Bhāgavata.

शतकमिति निर्धारणायानेकानि सुस्पष्टानि प्रमाणानि खल्वसमत्सविधे।[१] ए० ए० मैकडोनलाख्यसुधिया चोक्तम्—प्रायश इयं रचना द्वादशक्रैस्तशतके विहितेत्यङ्गीकर्तु शक्यते।[२]

बोपदेवस्य भागवतकर्तृत्वं निराकुर्वन् सी० वी० वैद्यः कथयति[३]—भागवते हि पुराणे गोपीनां काव्यगुणसम्पन्नं प्रेमवर्णनम्। परं न तत्र राधाया नाम कुत्रापि निर्दिष्टम्। अनेनैतत्पुराणस्य प्रतिभावतो रचयितुः समये राधासंस्कृतिर्न प्रादुर्बभूवेत्यनुमीयते। जयदेवेन महाकविना गीतगोविन्दकाव्यं राधाकृष्णयोः प्रीतिमाश्रित्य विरचितं तच्च ११६४ तमक्रैस्ताब्ददेशीयमिति सुप्रसिद्धम्। भागवतं गीतगोविन्दाद् बहुकालपूर्वमवर्ततेति निचश्प्रचं वक्तुं पार्यते। जयदेवबोपदेवौ किल प्रायशः समकालवर्तिनौ। एवं बोपदेवो नासीद् भागवतस्य रचयितेति प्रतीयते।

भागवतपुराणस्य रचनाकालविषये सी० वी० वैद्येन स्वकीयमतस्याभिव्यक्तिरेवं विहिता—अनेकानि पुराणान्याश्रित्य भागवतपुराणस्य समयः दशमक्रैस्तशतकस्य मध्ये शक्यते निर्धारयितुमिति मे प्रतीयते। इदं हि पुराणं शङ्करात् (नवमक्रैस्तशतकस्यारम्भकालः) नियतमेव पश्चाद्वर्ति गीतगोविन्दकाराज्जयदेवाच्च पूर्ववर्ति। महाकविर्जयदेवश्च वंगदेशस्य राज्ञो लक्ष्मणसेनस्य शासनकाले (११६४ तमे क्रैस्ताब्दे) अभूत्। एतन्मतस्य प्रतिपादनाय तेनानेका युक्तयोऽपि प्रस्तुताः।[४]

सी० वी० वैद्यस्येदं मतं बी० एन० कृष्णमूर्त्तिनाऽपास्तम्। तेनेदमुक्तम्[५]—अनेन पुराणेन त्रयोदशक्रैस्तशतकाद् बहुकालपूर्ववर्तिना भाव्यमिति

---

१. Ibid., p. 556. Also see footnote 1 : Bopadeva was contemporary of Hemādri, who lived between 1260 and 1309; footnote No. 2 : Ānandatīrtha Mādhava (1199-1278), who himself wrote a commentry on the Bhāgavata Purāṇa places it on a level with the Mahābhārata; footnote No. 3 : Pargiter (Ancient Indian Historical Tradition) places it about the ninth century A. D., Farquhar (Outlines ... p. 229 ff) about 900 A. D.

२. Macdonell : A History of Sanskrit Literature, p. 302

३. C. V. Vaidya : The Date of the Bhāgavata Purāṇa, Journal of the Bombay Branch of the Royal Asiatic Society (New Series), Vol. I. (1925), p. 147

४. Ibid., p. 144. Also see pp. 144-158

५. Annals of the Bhandarkar Oriental Research Institute, Poona, Vol. XIV, 1932-33, pp. 184-185

सी० वी० वैद्यस्य यन्मतं तत्त्वहं सर्वथाऽनुमोदये, परं नाहं तस्येदं पुराणं काल-दृष्ट्या दशक्रैस्तशतकेन सह सम्बद्धमिति निष्कर्षमङ्गीकर्तुं क्षमो न चैतत्साधकानि प्रमाणान्यपि । वैद्यमहोदयनिर्दिष्टसमयाद्बहुकालपूर्ववर्तीदं पुराणमित्यहं दृढं विश्वसिमि । असौ खलु प्रायशोऽविचारितरमणीयान् तर्कानस्फुटांश्च सिद्धान्ता-नाश्रयति । स्वकीयमतस्य परिपुष्ट्यै च न तेनेतरग्रन्थेभ्यः किमपि बाह्यसाक्ष्यं प्रस्तुतम् । तथाहि—भागवतपुराणं माध्वाचार्यान्नियतमेव पूर्ववर्ति तच्च दशम-क्रैस्तशतके स्थानं लब्धुमर्हतीति वैद्यमहोदयेनाभिहितम् ।[1] माध्वाचार्यो भागवतस्य सुप्रसिद्धायाष्टीकाया रचयिता भागवताच्च बहून् सङ्केतानप्यसौ गृह्णातीति कारण-द्वयं स्वमतसिद्धये वक्तुमपार्यत । परं स भागवतस्यातलस्पर्शिनिरीक्षणेन भाग-वतस्य वैष्णवधर्मो माध्वस्य वैष्णवधर्मेण न प्रभावितो न च तेन सम्बद्ध इत्यत्र न स्यात्कस्यापि सन्देहपदमिति प्रतिपादयति ।[४] परं यद्येतदेव माध्वस्य वैष्णव-धर्मसम्बन्धे कथ्येत तर्हि विपरीत एव निष्कर्ष आपतेत् । एवमत्र वैद्यमहोदयस्य कथनेऽतिव्याप्तेः प्रसङ्गः । अपरं च भागवतपुराणं शङ्करात्पश्चाद्वर्तीति प्रतिपाद-नाय वैद्यमहोदयः शङ्करेण भागवतान्न कोऽपि सङ्केतो गृहीतो न चैतच्छङ्करात् पूर्वं विदितमासीदिति कारणद्वयं प्रदर्शयितुमशक्नोत् ।[२] परं भागवते बुद्धोविष्णो-रवतारत्वेन वर्णित इति हेतुस्तेन प्रदर्शितः । बुद्धस्य चावताररूपेण प्रसिद्धिः शङ्करादनन्तरमेकस्मिन्नल्पीयसि समये भवितु नाशक्यत (अतएव भागवतस्य समयः शङ्कराद् बहुकालानन्तरवर्तीति) । अन्यच्च भागवते कपिलमुनिरपि विष्णोरवतारः प्रकीर्तितः । शङ्करेणैतद्विषये न किमप्युक्तम् । वैद्यमहोदयस्येदं मतं काल्पनिकं निराधारमप्रामाणिकं च प्रतीयते ।[3]

अथ बी० एन० कृष्णमूर्त्तिः स्वकीयं लेखमेवमुपसंहरति— अतएवात्रप्रस्तूय-मानैरेभिः प्रमाणैरिदं सुविशदं स्याद् यद् भागवतं पुराणं दशमे क्रैस्तशतके सुप्रसिद्धिं जगाम (कतिपयशतकपूर्वमिदं निर्मितमासीदिति तु स्पष्टमेव) सप्तमे च क्रैस्तशतके व्यरच्यत, कामं तस्य समयोऽस्मात् पूर्वं न स्वीक्रियेत ।[४] विष्णुपुरा-णस्य विषयसूच्यां भागवतपुराणस्य नामग्रहणमेतस्य प्रत्नतमत्वमभिसूचयति ।[५]

---

१. Journal of the Bombay Branch of the Royal Asiatic Society (New Series), p. 153

२. Ibid., p. 152

३. Journal of the Bombay Branch of the Royal Asiatic Society, Vol. I, (New Series), 1925

४. Annals of the Bhandarkar Oriental Research Institute, Poona, Vol. XIV, 1932-33, p. 218

५. ब्राह्मं पाद्मं वैष्णवं च शैवं भागवतं तथा । विष्णुपु० ३, ६, २१

# तुलनात्मकाध्ययनोपयोगिग्रन्थानां संक्षिप्तः परिचयः

## १. विष्णुधर्मोत्तरपुराणम्

एतत्पुराणं वैष्णवसम्प्रदायेन सह सम्बद्धम्। अस्य पुराणस्याष्टादशसु महापुराणेषु गणना न विधीयते। अतएवेदमुपपुराणेष्वन्तर्भवति। विष्णुपुराणस्य षडंशानां परिसमाप्तौ सप्तमादंशादस्य पुराणस्य प्रारम्भः। विष्णुपुराणस्योत्तरभागात्मकत्वादेवास्य पुराणस्य विष्णुधर्मोत्तरमिति नाम। अस्मिन् पुराणे ३५५ अध्यायास्ते च खण्डत्रये विभाजिताः।

अत्र विभिन्नलोकानामयोध्यायाश्च वर्णनमिक्ष्वाकुसगरभगीरथभृग्वादिवंशवर्णितिः, परशुरामचरितं विष्णोर्दिव्य विभूतिकथनं, कल्पान्ते जगदवस्था, ज्योतिषविद्या, ध्रुवपृथुनिम्यङ्गिरसां वंशा, बलिदैत्यस्य पुरुरवसादीनां च गन्धर्वाणां कथाः, श्राद्धा हिमवद्वर्णनं, विष्णुस्तुतिर्भरतकथा, रावणस्कन्दकथा, राजादिलक्षणानि, साध्वीप्रशंसा, सावित्र्युपाख्यानं, पशुचिकित्सा, राजधर्मवर्णनं विविधस्नानकथनं, यतिधर्मनिरूपणं, ज्योतिषाद्या विविधविद्या, गायत्र्युष्णिगादिच्छन्दोवर्णनमपिधानकोशवर्णनमनुप्रासयमकाद्यलङ्कारकथनं, गीतशास्त्रं, शृङ्गारादिरसनिरूपणं, चित्रकर्म, वास्तुविद्या, होमविधिवर्णनं विविधदेवानां पूजाविधानं, विविधव्रतनियमानां वर्णाश्रमधर्माणां च कथनं, मानमदादिदोषवर्णनं, ब्रह्मचर्यादिप्रशंसाऽष्टौ विवाहा, दानप्रशंसा नृसिंहस्तोत्रं च।

यद्यपीदमुपपुराणं विष्णुपुराणस्यैवोत्तरार्धं परमिदं विषयवस्तुदृष्ट्या स्वतन्त्र इव ग्रन्थो विद्यते। इदं पुराणमपि विभिन्नेषु कालेषु निर्ममे येनास्य केचनांशाः प्राक्तनाः केचन चार्वाचीनाः। एतद्धि नाट्यशास्त्रेण सह बहुषु स्थलेषु सादृश्यमुपगच्छति। केवलं रससंख्याविषये रूपकाणां सम्बन्धेऽत्र वैपरीत्यम्। अस्मादस्य रचनाकालो भरतनाट्यशास्त्रादनन्तरवर्तीत्यनुमीयते। डा० काणेमहोदयेन स्वकीये ग्रन्थे—अस्य पुराणस्य स्थितिर्भरतभामहोद्भटेभ्यः पूर्ववर्तिभ्य आलङ्कारिकेभ्योऽनन्तरं वामनादिभ्यश्च पश्चाद्वर्तिभ्य आचार्येभ्यः पूर्वमतएवास्य पुराणस्य समयः पञ्चमात् क्रैस्तशतकान्न पूर्वं इति सहेतुकं प्रतिपादितम्।[1] विण्टरनिट्ज़महोदयेनास्य रचनाकालः ६२८ क्रैस्ताब्दादारभ्य १००० क्रैस्ताब्दं

---

१. P. V. Kane : Sāhityadarpaṇa of Viśvanātha and the History of Sanskrit Poetics, p. 68

यावन्मतम्।[1]

अलङ्काररसदोषगुणरीतीनां प्रत्येकमध्यायेऽग्निपुराणविष्णुधर्मोत्तरपुराणयोस्तत्तदलङ्कारादीनां लक्षणैः सह काव्यलङ्कारकाव्यादर्शसरस्वतीकण्ठाभरणोक्तलक्षणानां तुलना विहिता। एतेषां ग्रन्थानामप्यत्र संक्षिप्तः परिचयः प्रासङ्गिक इति प्रतीयते।

## २. काव्यालङ्कारः

एष ग्रन्थो भामहाचार्येण विरचितः। भरतादनन्तरमनेकेषु शतकेष्वलङ्कारविषये लिखितानां ग्रन्थानां विषये न किमपि ज्ञायते। एष काव्यालङ्कार एव तदानींतनोऽलङ्कारविषयकः प्रामाणिकतमो ग्रन्थः। अस्मिन् भरतनाट्यशास्त्रस्य न सर्वत्रानुकरणम्। सर्वैरेव प्रमुखतमैरालङ्कारिकैः स्वग्रन्थानां कृते काव्यालङ्कारात्स्वल्पा अनल्पा वांऽशा अगृह्यन्त। केचन तस्माद् विषयवस्तु केचन श्लोकान् केचन तदंशानुदाहरणानि चागृह्णन्। अस्मिन् ग्रन्थे भामहेनालङ्कारसम्प्रदायस्य प्रतिपादनं विहितम्। भामहदण्डिनौ समकालवर्तिनौ समयश्चानयोः प्रायः ६०० क्रै० स०—७५० क्रै० स० इति काणेमहोदयस्यभिमतम्।[2] उपाध्यायोपाह्वबलदेवेन बटुकनाथशर्मणा च भामहस्य ४०० क्रैस्ताब्दः पूर्वसीमा ६०० क्रैस्ताब्दश्चोत्तरसीमा मतः।[3]

अस्मिन् ग्रन्थे ३९८ श्लोकाः। अस्य पर्यवसाने द्वाभ्यां श्लोकाभ्यां ग्रन्थस्थश्लोकानां संख्या वर्ण्यविषयाश्च संक्षेपेण निर्दिष्टाः। इमे श्लोकाः सम्भूय चतुस्सहस्राणि जायन्ते।[4] ग्रन्थश्चैष षट्सु परिच्छेदेषु विभक्तः। प्रथमे परिच्छेदे काव्यप्रयोजनं काव्यलक्षणं तद्भेदाश्चोक्ताः। द्वितीये तृतीये चालङ्काराणां वर्णनम्। चतुर्थे भरतोक्ता दशकाव्यदोषाः सविस्तरं व्याख्याताः। पंचमे परिच्छेदे प्रतिज्ञाहेतुदृष्टान्तहीनदोषाः। षष्ठे च परिच्छेदे सन्दिग्धपदानां शुद्धरूपाणि प्रस्तुतानि।

---

१. Winternitz : The History of Indian Literature, Vol. I, p. 58

२. P. V. Kane : History of Sanskrit Poetics, p. 94

३. बलदेवोपाध्याय-बटुकनाथशर्माणौ—काव्याल० पृ० ५५

४. षष्ट्या शरीरं निर्णीतं शतषष्ट्या त्वलङ्कृतिः।
पंचाशता दोषदृष्टिः सप्तत्या न्यायनिर्णयः॥
षष्ट्या शब्दस्य शुद्धिः स्यादित्येवं वस्तुपञ्चकम्।
उक्तं षड्भिः परिच्छेदैर्भामहेन क्रमेण वः॥ काव्याल० ३, ६५-६६

## ३. काव्यादर्शः

एष ग्रन्थो दण्डिना विरचितः। प्रायशोऽनेकैर्विद्वद्भिर्दण्डिनः समयः षष्ठं क्रैस्तशतकं मतम्। पी० वी० काणेमहोदयेनास्य समयः प्रायः ६६०-६८६ क्रैस्ताब्देषु स्वीकृतः।[१] अस्मिन् हि ग्रन्थे रीतिसम्प्रदायः प्राधान्येन स्थापितोऽलङ्कारसम्प्रदायश्च गौणत्वं प्रापितः। अत्र गुणालङ्कारयोरपि सविस्तरं वर्णनमत एवास्य केन सम्प्रदायेन सह सम्बन्धविशेष इति निर्णेतुं न शक्यते। अस्य विषयप्रतिपादनरीतिः प्रवाहमयी माधुर्यगुणोपेता च।

अलङ्कारशास्त्रीयविषयाणां प्रतिपादनस्येयं रीतिः काव्यालङ्काराद् रोचकतरा वरीयसी च परं सूक्ष्मविवेचने तत्त्वान्वेषणे च काव्यालङ्काररीतिरेवातिशेते। अस्मिन्नलङ्कारादीनां लक्षणानां दृष्टान्ता दण्डिना स्वयमेव विरचिताः। भामहस्य कतिपये सिद्धान्ता अप्यत्रापास्ताः।

अत्र चत्वारः परिच्छेदास्तेषु ६६० श्लोकाः। प्रथमे परिच्छेदे काव्यलक्षणं काव्यभेदा वैदर्भीगौडीये रीती दशगुणाश्च सविस्तरं व्याख्याताः। द्वितीये परिच्छेदेऽलङ्काराणां लक्षणान्युदाहरणानि च सम्यगाख्यातान्युपमाया अप्यनेके भेदाः प्रदर्शिताः। तृतीये परिच्छेदे शब्दालङ्कारा वर्णितास्तत्र यमकालङ्कारः सविशेषं निरूपितः। चतुर्थे परिच्छेदे दशविधदोषाणां लक्षणान्युदाहरणानि च प्रोक्तानि।

## ४. सरस्वतीकण्ठाभरणम्

भोजराजेनैष ग्रन्थो निरमायि। डा० भाण्डारकरमतेनास्य समय एकादशक्रैस्तशतकस्य पूर्वार्धम्। डा० बुह्लरमहोदयेन भोजराजसमयः १०६२ तमात् क्रैस्ताब्दात् किञ्चिदनन्तरवर्तीति निर्धारितः। काणेमहोदयेनास्य समयः १००५-१०५४ क्रैस्ताब्देषु मतः।[२]

अस्मिन् ग्रन्थे पञ्चपरिच्छेदास्तत्र च ६४३ कारिकाः। एतासु कारिकासु कतिपयाः कारिकाः काव्यालङ्कारकाव्यादर्शध्वन्यालोकादिभ्यः साकल्येनोद्धृताः। अस्य प्रथमे परिच्छेदे काव्यप्रयोजनं काव्यलक्षणं काव्यभेदा दोषा गुणाश्च व्याख्याताः। द्वितीये परिच्छेदे चतुर्विंशतिशब्दालङ्काराणां जातिरीतिवृत्तिश्लेषा-

---

१. P. V. Kane : History of Sanskrit Poetics, p. 124

२. Ibid., p. 250

दीनां च निरूपणम्। तृतीये परिच्छेदे चतुर्विंशत्यर्थालङ्कारा लक्षिता उदाहृताश्च। चतुर्थे परिच्छेदे चतुर्विंशतिशब्दार्थालङ्काराः सोदाहरणं वर्णिताः। पञ्चमे परिच्छेदे च रसभावनायकनायिकावर्णितिर्नायकनायिकयोरूपभेदास्तच्चेष्टा मुखादयः पञ्चसन्धयो भारत्यादयश्च पञ्चवृत्तयः सविस्तरं निरूपिताः।

प्रथमोऽध्यायः

# अलंकारविवेचनम्

## अलङ्कारशब्दस्यार्थः

अलङ्क्रियतेऽनेन डुकृञ्+घञिति व्युत्पत्तिरस्य शब्दस्य शब्दार्थचिन्तामणौ दृश्यते ।[1]

अलङ्कारशब्दपर्यायभूतस्यालङ्कृतिशब्दस्य प्रयोगोऽरङ्कृतिरूपेण ऋग्वेदे दृश्यते ।[2] आचार्येण भरतेन स्वीये नाट्यशास्त्रे गुणालङ्कारार्थद्योतको भूषणमिति शब्दः प्रयुक्तः ।[3] अलङ्कारा हि काव्यस्य शोभाया आधायका अपरिहार्या धर्मा इति दण्डिना प्रतिपादितम् ।[4] अलङ्कारा हि काव्यस्य सौन्दर्याभिव्यञ्जका धर्मास्तेषामत्र आवश्यिकी स्थितिरित्येतद् वामनस्य मतम् ।[5]

'शोभातिशयाधायका रसभावादीनां चोपकर्त्तारो ये शब्दार्थयोरस्थायिनो धर्मास्तेऽलङ्काराः । यथा देहस्य शोभाऽङ्गदादिभिरलङ्करणैर्जायते तथैव काव्यस्य सौन्दर्यमेभिरलङ्कारैः सम्पाद्यत इति सर्वं साहित्यदर्पणे विश्वनाथेन सम्यक् प्रतिपादितम् ।[6] इमेऽलङ्काराः काव्यस्य न सन्ति सहजा अपरिहार्याश्च धर्मा अपितु तेऽस्थिरा विवक्षाधीनाश्च ।

---

१. सुखानन्दकृतशब्दार्थचिन्तामणिः, प्रथयो भागः, पृ० १८२ (घासीराम कन्हैयालाल, आगरा, संवत् १९२१)

२. का ते अस्त्यरङ्कृतिः सूक्तैः कदा नूनं ते मघवन् दाशेम । ऋ० ७,२९,३

३. अलङ्कारैर्गुणैश्चैव बहुभिः समलङ्कृतम् ।
भूषणैरिव चित्रार्थैस्तद्भूषणमिति स्मृतम् ॥ नाट्यशा० १७, ६

४. काव्यशोभाकरान् धर्मानलङ्कारान् प्रचक्षते ।
ते चाद्यापि विकल्प्यन्ते कस्तान् कार्त्स्न्येन वक्ष्यति ॥ काव्याद० २,१

५. काव्यं ग्राह्यमलङ्कारात् । सौन्दर्यमलङ्कारः । काव्याल० सू० वृ० १, १-२

६. शब्दार्थयोरस्थिरा ये धर्माः शोभातिशायिनः ।
रसादीनुपकुर्वन्तोऽलङ्कारास्तेऽङ्गदादिवत् ॥ साहित्यद० १०, १

## अग्निपुराणवर्त्यलङ्कारभागस्य वैशिष्ट्यम्

अग्निपुराणस्यालङ्कारप्रकरणे प्रतिपादितानि बहून्यलङ्कारलक्षणान्यस्य सम्प्रदायस्य परम्परागतैरलङ्कारलक्षणैः सार्धं न सङ्गच्छन्ते। इदमेवालङ्काराणां वर्गीकरणविषयेऽपि वक्तुं पार्यते। पुराणस्यास्य शब्दालङ्काराणां वर्गीकरणे तु दण्डिनः स्वल्पः प्रभावः परिलक्ष्यते परमर्थालङ्काराणां वर्गीकरणमितरेषां पूर्ववर्तिग्रन्थानां प्रभावादस्पृष्टम्। अत्राष्टविधा अलङ्काराः प्रोक्ताः। अष्टादशविधाया उपमाया अनेकेषां भेदानां काव्यादर्शस्यानेकैरुपमाभेदैः सह साम्यम्। अत्रोभयालङ्काराख्यो यस्तृतीयोलङ्कारभेदः स केनापि पूर्ववर्तिनाऽऽचार्येण नोक्तः। एवमस्मिन्नलङ्कारसम्प्रदायस्य परम्परागतसरणीमवगणय्य कतिपयस्थलेषु नूतनमार्गोऽप्यवलम्बितः।

अस्मिन् पुराणेऽर्थालङ्कारस्य शब्दालङ्काराद् भूयो महत्त्वं प्रदर्शितम्—

**अलङ्करणमर्थानामर्थालङ्कार इष्यते।**
**तं विना शब्दसौन्दर्यमपि नास्ति मनोहरम्॥**
**अर्थालङ्काररहिता विधवेव सरस्वती।**[1]

अत्र न केवलमर्थालङ्कारस्योपयोगित्वं प्रोक्तं, परं काव्ये तस्यावश्यिकी स्थितिरित्यपि प्रतिपादितम्।

अर्थालङ्कारेणेव शब्दार्थालङ्कारेणापि शब्दार्थयोः शोभा विधीयत[2] इत्युक्त्वा शब्दार्थालङ्कारस्य महत्त्वमप्यत्र प्रख्यापितम्।

शब्दाद्यलङ्काराणां लक्षणैर्वर्गीकरणेन चास्य पुराणस्य वैलक्षण्यं सुतरां ज्ञायते। इदानीमत्र पूर्वं तावत् त्रिविधानामलङ्काराणां वर्गीकरणं प्रस्तूयते। अलङ्कारलक्षणानां च तुलनात्मकमध्ययनमस्मिन्नेव प्रकरणेऽग्रतो विधास्यते।

अग्निपुराणस्य चतुर्ष्वध्यायेषु (३४२-३४५) त्रिविधा अलङ्काराः—

१. शब्दालङ्काराः २. अर्थालङ्काराः ३. उभयालङ्काराश्च।

---

१. अग्निपु० ३४४, १-२

२. शब्दार्थयोरलङ्कारो द्वावलङ्कुरुते समम्।
एकत्र निहितो हारः स्तनं ग्रीवामिव स्त्रियाः॥ तत्रैव ३४५, १

## १. शब्दालङ्काराः

इमे नवसंख्याकाः—

| | | |
|---|---|---|
| १. छाया | २. मुद्रा | ३. उक्तिः |
| ४. युक्तिः | ५. गुम्फना | ६. वाकोवाक्यम् |
| ७. अनुप्रासः | ८. चित्रम् | ९. दुष्करं च ।[1] |

(१) छाया—अस्याश्चत्वारो भेदाः—

१. लोकोक्तिः २. छेकोक्तिः
३. अर्भकोक्तिः ४. मत्तोक्तिश्च ।[2]

(२) मुद्रा—अस्या न कोऽपीतरो भेदः ।

(३) उक्तिः—अस्यां षड्विधा उक्तयः—

१. विध्यात्मिका २. अविध्यात्मिका
३. नियमपरा ४. अनियमपरा
५. विकल्पात्मिका ६. परिसंख्यात्मिका च ।[3]

(४) युक्तिः—एषाऽपि षड्विधा—

१. पदगता २. पदार्थगता
३. वाच्यगता ४. वाच्यार्थगता
५. विषयगता ६. प्रपञ्चगता च ।[4]

(५) गुम्फना—एषा त्रिविधा—

१. शब्दगता २. अर्थगता ३. क्रमगता च ।[5]

(६) वाकोवाक्यम्—अस्य द्वौ भेदौ—

१. ऋजुवाकोवाक्यम् २. वक्रोक्तिवाकोवाक्यं च ।

ऋजुवाकोवाक्यं द्विविधम्—

१. प्रश्नपूर्वकम् २. अप्रश्नं च ।

---

१. अग्निपु० ३४२, १९-२०
२. तत्रैव ३४२, २१-२५
३. तत्रैव ३४२, २८
४. तत्रैव ३४२, २९-३०
५. तत्रैव ३४२, ३१

वक्रोक्तिवाकोवाक्यमपि द्विविधम्—

१. भङ्गिमावक्रोक्तिमत् २. काकुवक्रोक्तिमच्च ।[1]

(७) अनुप्रासः—एष द्विविधः— एकवर्णगतावृत्तिरनेकवर्णगतावृत्तिश्च ।

एकवर्णगतावृत्तावनुप्रासे पञ्च वृत्तयो दृश्यन्ते । अत एवायं पञ्चविधः—

१. मधुरावृत्तिः २. ललितावृत्तिः
३. प्रौढावृत्तिः ४. भद्रावृत्तिः
५. परुषावृत्तिश्च ।

परुषायाश्च कर्णाटी, कौन्तली, कौन्ती, कौङ्कणी, वामनासिका, द्रावणी माधवी चेमे षड् भेदा उपलभ्यन्ते ।[2]

भिन्नार्थप्रतिपादिकाऽनेकवर्णगतावृत्तिरेव यमकमुच्यते इदं । च दशविधम्—

१. अव्यपेतम् २. व्यपेतम्
३. पादान्तम् ४. काञ्चीयमकम्
५. संसर्गयमकम् ६. विक्रान्तयमकम्
७. पादादियमकम् ८. आम्रेडितम्
९. चतुर्व्यवसितम् १०. मालायमकं च ।[3]

(८) चित्रम्—अस्यालङ्कारस्येमे सप्त भेदाः—

१. प्रश्नः २. प्रहेलिका
३. गुप्तपदम् ४. च्युतपदम्
५. दत्तपदम् ६. च्युतदत्तपदम्
७. समस्या च ।[4]

(९) दुष्करम्—एतत् त्रिविधम्—

१. नियमवत् २. विदर्भवत्
३. बन्धवच्च

---

१. अग्निपु० ३४२, ३२-३३
२. तत्रैव ३४३, १-११
३. तत्रैव ३४३, ११-१७
४. तत्रैव ३४३, २२-२३

## २. अर्थालङ्काराः

इमेऽष्टसंख्याकाः—

| | |
|---|---|
| १. स्वरूपम् | २. सादृश्यम् |
| ३. उत्प्रेक्षा | ४. अतिशयः |
| ५. विभावना | ६. विरोधः |
| ७. हेतुः | ८. समं च ।[1] |

अत्र वर्णितेष्वष्टस्वलङ्कारेषु सप्तानामेव लक्षणान्युपलभ्यन्ते समालङ्कारस्य न किमपि लक्षणं दृश्यते । समालङ्कारवर्णनावसरे विशेषोक्त्यलङ्कारस्य लक्षणमत्र प्रस्तुतम् ।[2]

(१) स्वरूपम्—एतद् द्विविधम्—

१. निजम् २. आगन्तुकं च ।

(२) सादृश्यम्—अस्य चत्वारो भेदाः—

| | |
|---|---|
| १. उपमा | २. रूपकम् |
| ३. सहोक्तिः | ४. अर्थान्तरन्यासश्च । |

उपमाया अष्टादश भेदा निरूपिताः—

| | |
|---|---|
| १. धर्मवस्तुप्रधानोपमा | २. परस्परोपमा |
| ३. विपरीतोपमा | ४. नियमोपमा |
| ५. अनियमोपमा | ६. समुच्चयोपमा |
| ७. व्यतिरेकोपमा | ८. बहूपमा |
| ९. मालोपमा | १०. विक्रियोपमा |
| ११. अद्भुतोपमा | १२. मोहोपमा |
| १३. संशयोपमा | १४. निश्चयोपमा |
| १५. वाक्यार्थोपमा | १६. असाधारणोपमा |
| १७. अन्योपमा | १८. गगनोपमा च ।[3] |

पुन उपमाया अन्ये पञ्चभेदा अप्यत्र वर्णिताः—

१. प्रशंसा २. निन्दा

---

१. अग्निपु० ३४४, २-३

२. तत्रैव ३४४, २६-२७

३. तत्रैव ३४४, १०-२०

३. कल्पिता　　४. सदृशी

५. असदृशी च ।[1]

रूपकसहोक्त्यर्थान्तरन्यासालङ्काराणामन्ये भेदा नोक्ताः ।

(३) उत्प्रेक्षा—अस्यापि नान्यः कश्चिदपरो भेदः ।

(४) अतिशयः—एष द्विविधः—

१. सम्भवः　　२. असम्भवश्च ।[2]

(५-६) विभावनाया विरोधस्य च नान्ये भेदाः ।

(७) हेतुः—एष द्विविधः—

१. कारकः　　२. ज्ञापकश्च ।[3]

(८) समः —अस्यालङ्कारस्य नात्र किमपि लक्षणम् ।

## ३. शब्दार्थालङ्काराः

इमे हि द्वादश संख्याकाः—

| | |
|---|---|
| १. प्रशस्तिः | २. कान्तिः |
| ३. औचित्यम् | ४. संक्षेपः |
| ५. यावदर्थता | ६. अभिव्यक्तिः |
| ७. समाधिः | ८. आक्षेपः |
| ९. स्तुतम् | १०. समासोक्तिः |
| ११. अपह्नुतिः | १२. पर्यायोक्तं च । |

(१) प्रशस्तिः —एषा द्विविधा—

१. प्रेमोक्तिपरा　　२. स्तुतिपरा च ।[4]

(२) कान्तिः —नास्याः कश्चिदपरो भेदः ।

(३) औचित्यम् —एतद् द्विप्रकारकम्—

१. ऊर्जस्वि　　२. मृदुसन्दर्भं च ।[5]

---

१. अग्निपु० ३४४, २१

२. तत्रैव ३४४, २५-२६

३. तत्रैव ३४४, २९-३०

४. तत्रैव ३४५, ३-४

५. तत्रैव ३४५, ५

(४) संक्षेपः —अस्य नेतरे भेदाः।

(५) यावदर्थता —अस्या अपि भेदा न दृश्यन्ते।

(६) अभिव्यक्तिः —अस्याः द्वौ भेदौ—

१. श्रुतिः २. आक्षेपश्च।

श्रुतिरियं द्विविधा :—

१. नैमित्तिकी २. पारिभाषिकी च।

नैमित्तिकी चापि द्विविधा—

१. मुख्या २. औपचारिकी च।

एवमभिव्यक्तेः पञ्चभेदाः।[1]

(६-१२) अन्येषां समाध्याक्षेपस्तुतसमासोक्त्यपह्नुतिपर्यायोक्ताख्यषडलङ्काराणां विविधभेदा नात्रावलोक्यन्ते।

—०—

## अग्निपुराणस्थकाव्यशास्त्रीयभागस्य सम्प्रदायः

यद्यप्यग्निपुराणकारेण स्वपूर्ववर्तिनां भरतभामहवामनरुद्रटाख्याचार्याणां ग्रन्थेभ्यो बहूनि लक्षणान्यवैकल्येन, स्वल्पानल्पपरिवर्तनेन वाऽगृह्यन्त तथापि पुराणेऽस्मिन्न कस्यचिदपि सम्प्रदायविशेषस्य सिद्धान्ता अङ्गीकृता न च प्रख्यापिता इति सूक्ष्मविवेचनानन्तरं ज्ञायते।

वस्तुत एतत्पुराणवर्णितः काव्यशास्त्रीयो भागः काञ्चिदपरामविदितां परम्परामनुसरति या खलु बहुषु विचारेषु प्रत्नतरैः सम्प्रदायैः सह न संवदति। अत्र हि काव्यशास्त्रस्य रसालङ्कारदोषगुणरीतिविषयकाः सर्वविधा विचाराः प्रकटिताः। बहुषु स्थलेष्वनेकानि मतानि पूर्ववर्तिनामाचार्याणां कृतिभ्योऽनालोचनात्मकविधिना सङ्गृहीतानि, परमत्रोपलभ्यमानाः केचन विचाराः पूर्ववर्तिषु ग्रन्थेषु नोपलभ्यन्ते।

एतद्विषये सुरेशमोहनभट्टाचार्यमहाभागेन निपुणं विचारितम्।[2] इदानीं

---

१. अग्निपु० ३४५, ७-१२

२. Suresh Mohan Bhattacharya : Peculiarities in the Alaṁkāra-section of the Agnipurāṇa, pp. 42-49, Bulletin of the Deccan College Research Institute, Poona, Vol. 20, Part I, 1960, (Sushil Kumar De Felicitation Volume).

तद्विचारान् समाश्रित्य विभिन्नसम्प्रदायैः सह विद्यमानस्य वैषम्यस्य प्रदर्शनादनन्तरं पुराणस्यास्य सम्प्रदायो विचार्यते।

एतत्पुराणस्य काव्यशास्त्रप्रकरणे नाट्यशास्त्रं निरूपितम्। एवं तेन काव्यशास्त्रस्य प्राधान्यं नाट्यशास्त्रस्य च गौणत्वं प्रतिपादितम्। अग्निपुराणात् पूर्ववर्तिनि कस्मिंश्चिदपि ग्रन्थे काव्यशास्त्रप्रकरणे नाट्यशास्त्रस्य निरूपणं न दृश्यते। भरतनाट्यशास्त्रे नाट्यशास्त्रमेव प्राधान्येन वर्णितं काव्यशास्त्रं तु तत्र संक्षेपेण नाट्याङ्गतया प्रतिपादितम्। यद्यप्यग्निपुराणकारेण नाट्यशास्त्रविषयिकी प्रचुरा सामग्री नाट्यशास्त्रादुपात्ता परं केषुचिद् विशिष्टविचारेष्वत्र नाट्यशास्त्रेण सह विप्रतिपत्तयोऽपि दृश्यन्ते।

नाट्यशास्त्रे दशेमे रूपकभेदाः प्रकीर्तिताः—१. नाटकम् २. सप्रकरणम् ३. अङ्कः ४. व्यायोगः ५. भाणः ६. समवकारः ७. वीथी ८. प्रहसनम् ९. डिमः १० ईहामृगं च।[1]

अग्निपुराणेऽपीमे दशभेदा वर्णिताः[2] परमेताननतिरिच्यान्येऽपि सप्तदशभेदा एवमभिहिताः—१. त्रोटकम् २. नाटिका ३. सट्टकम् ४. शिल्पकः ५. कर्णा एका (?) ६. दुर्मल्लिका ७. प्रस्थानम् ८. मणिका ९. माणी १०. गोष्ठी ११. हल्लीशकम् १२. काव्यम् १३. श्रीगदितम् १४. नाट्यरासकम् १५. रासकम् १६. उल्लाप्यकम् १७. रासकं च।[3] नाट्यशास्त्रे केवलं नाटिकैव वर्णिता न तत्रान्येषां भेदानां किमपि वर्णनम्।[4] एवमुपरिनिर्दिष्टा ये षोडश भेदा भरतनाट्यशास्त्रे नोक्तास्तेऽग्निपुराणे कस्माच्चिदपरस्मादविदितस्रोतसोऽगृह्यन्तेति प्रतीयते। सामान्यमिति विशेषश्चेति नाट्यस्य द्वौ भेदावपि सर्वप्रथममग्निपुराण एव व्यपदिष्टौ।[5] पूर्वरङ्गे नान्द्यादिद्वात्रिंशदङ्गानां निर्देशोऽपि सर्वप्रथममत्र विहितः।[6] कवेस्तद्रचनायाश्च प्रशंसकस्य मञ्चस्य च व्यवस्थापयितुर्नाम नाट्यशास्त्रे स्थापक इति सञ्ज्ञितं, परमग्निपुराणे तु तस्य सूत्रधार इति।[6]

---

१. नाट्यशा० २०, २-३
२. अग्निपु० ३३८, १-२
३. तत्रैव ३३८, २-४
४. नाट्यशा० २०, ६२-६४
५. अग्निपु० ३३८, ४-७
६. तत्रैव ३३८, ८
७. नाट्यशा० ५, १६४; अग्निपु० ३३८, १५

अलङ्कारसम्प्रदायस्य प्रधानतमानां भामहोद्भटरुद्रटाख्याचार्याणामलङ्कार-विषयकैर्विचारैरपि पुराणमिदं न बहु प्रभावितम् । सर्वप्रथमं वामनेनालङ्काराणां शब्दालङ्कारार्थालङ्काराख्यौ द्वौ विभागौ विहितौ । रुद्रटेनाप्यलङ्काराणामिमौ द्वौ वर्गावङ्गीकृत्य वक्रोक्त्याद्यलङ्काराः शब्दालङ्कारेषु वास्तवादयश्चार्थालङ्कारेषु संख्याताः ।[1] अग्निपुराणे शब्दार्थालङ्काराख्यस्तृतीयो वर्गोऽपि विद्यते ।[2] परमयमस्मात्पुराणात्पूर्ववर्तिनि कस्मिंश्चिदपि ग्रन्थे विलोकयितुं न शक्यते । एवमेवाग्निपुराणोक्तशब्दालङ्कारलक्षणमपि पूर्ववर्तिषु ग्रन्थेषु नोपलभ्यते ।[3] अग्निपुराणे शब्दालङ्कारस्य नवेमे भेदाः—१. छाया २. मुद्रा ३. उक्तिः ४. युक्तिः ५. गुम्फना ६. वाकोवाक्यम् ७. अनुप्रासः ८. चित्रम् ९. दुष्करं च ।[4] वामनादिभिः पूर्ववर्तिभिराचार्यैरनुप्रास एव व्याख्यातः चित्रालङ्कारस्तु केवलं रुद्रटेनैव विवेचितम्[5] । वामनेनार्थालङ्काराणां संख्याविषये न किमपि निर्दिष्टम् । रुद्रटेन प्रधाना अर्थालङ्काराश्चत्वार एव मताः ।[6] परमग्निपुराणेऽष्टाविमेऽर्थालङ्काराः—१. स्वरूपम् २. सादृश्यम् ३. उत्प्रेक्षा ४. अतिशयः ५. विभावना ६. विरोधः ७. हेतुः ८. समं च ।[7] षट् चात्रैते शब्दार्थालङ्काराः—१. प्रशस्तिः २. कान्तिः ३. औचित्यम् ४. संक्षेपः ५. यावदर्थता ६. अर्थव्यक्तिश्च ।[8] एते ह्युभयालङ्काराः कस्यचित्पूर्ववर्तिन आचार्यस्य कृतौ नोदिताः ।

अग्निपुराणस्य रसनिरूपणमपि नितरामद्भुतम् । अत्र रसनिष्पत्तिविषयिकी नूतनैका कल्पना दृष्टिपथं समायाति । ब्रह्मणोंऽशभूतादहङ्कारात्पूर्वमभिमानः समुत्पन्नोऽस्माच्चाभिमानादुत्पन्ना रतिरेव परिपोषमुपेत्य शृङ्गारादिरसरूपतां याति ।[9] शृङ्गारादिरसानां स्थायिव्यभिचारिसात्त्विकभावानां च वर्णनेऽत्र

---

१. काव्यालङ्का० २, १३, ७, ९

२. अग्निपु० ३४५, १

३. ये व्युत्पत्यादिना शब्दमलङ्कर्तुमिह क्षमाः ॥
शब्दालङ्कारमाहुस्तान् काव्यमीमांसका विदः । अग्निपु० ३४२, १८-१९

४. तत्रैव ३४२, १९-२०

५. काव्यालङ्का० ५, १

६. अर्थस्यालङ्कारा वास्तवमौपम्यमतिशयः श्लेषः ।
एषामेव विशेषा अन्ये तु भवन्ति निःशेषाः ॥ तत्रैव ७, ९

७. अग्निपु० ३४४, १

८. अग्निपु० ३४५, २

९. तत्रैव ३३९, १-४

प्रायशो नाट्यशास्त्रमेवानुसृतं परं यत्रकुत्रचिदेतेषां संख्यायां क्रमे लक्षणेषु नामसु च व्यतिक्रमो विद्यते। नाट्यशास्त्रप्रोक्तेषु शृङ्गारहास्यकरुणरौद्रवीरभयानक-बीभत्साद्भुतसञ्ज्ञेष्वष्टसु रसेष्व[1]ग्निपुराणकारेण शान्ताख्यो नवमो रसोऽपि संयोजितः।[2] पूर्ववर्तिना रुद्रटेनापि स्वाभिमतदशरसेषु शान्तो रसः संख्यातः।[3] कदाचिदग्निपुराणकारेणैष तस्मादेव गृहीतः। भरतेन नाट्यशास्त्रे त्रयस्त्रिंशद् व्यभिचारिभावाः परिगणिताः परमग्निपुराणे त्वेते त्रिंशत्संख्याकाः। नाट्य-शास्त्रस्य निद्रासुप्तमरणाख्या व्यभिचारिभावा नात्र वर्तन्ते। प्रत्नतमग्रन्थेषु केवल-मग्निपुराण एव सात्त्विकभावानां सम्बन्धः सांख्यदर्शनेन सह प्रदर्शितमस्ति।[4] अग्निपुराणकारेण विभावस्य व्युत्पत्तिनिमित्तं लक्षणं नाट्यशास्त्रादग्राहि[5] पर-मस्यालम्बनोद्दीपनाख्यौ पुराणवर्तिनौ द्वौ भेदौ नाट्यशास्त्रेऽन्यस्मिन् वा पूर्वतरे कस्मिंश्चिद् ग्रन्थे नावलोक्येते। अग्निपुराणस्यानुभावलक्षणं भरतोक्तानुभाव-लक्षणाद् भिन्नम्।[6] अत्रानुभावस्य चत्वार इमे भेदाः—१. मन आरम्भः २. वागारम्भः ३. बुद्ध्यारम्भः ४. शरीरारम्भश्च।[7] एतेषामत्र सविस्तरं वर्णनम्। मन आरम्भश्च द्विविधः— १. पौरुषः २. स्त्रैणश्च। प्रथमस्य चैतेऽष्टौ भेदाः — १. शोभा २. विलासः ३. माधुर्यम् ४. स्थैर्यम् ५. गाम्भीर्यम् ६. लालित्यम् ७. औदार्यम् ८. तेजश्च।[8] द्वितीयस्य चेमे द्वादश विभावाः प्रकीर्तिताः—

---

१. नाट्यशा० ६, १५

२. शृङ्गारहास्यकरुणा रौद्रवीरभयानकाः॥
बीभत्साद्भुतशान्ताख्याः स्वभवाश्चतुरो रसाः॥ अग्निपु० ३३९, ८-९

३. शृङ्गारवीरकरुणा बीभत्सभयानकाद्भुता हास्यः।
रौद्रः शान्तः प्रेयानिति मन्तव्या रसाः सर्वे॥ काव्याल० १२, १३

४. अष्टौ स्तम्भादयः सत्त्वाद्रजसस्तमसः परम्॥ अग्निपु० ३३९, १७

५. (कः) विभाव्यते हि रत्यादिर्यत्र येन विभाव्यते। तत्रैव ३३९, ३५

(खः) बहवोऽर्था विभाव्यन्ते वागङ्गाभिनयाश्रिताः।
अनेन यस्मात्तेनायं विभाव इति सञ्ज्ञितः॥ नाट्यशा० ७, ४

६. (कः) आरम्भ एव विदुषामनुभाव इति स्मृतः।
स चानुभूयते चात्र भवत्युत निरुच्यते॥ अग्निपु० ३३९,४५

(खः) वागङ्गाभिनयेनेह यतस्त्वर्थोऽनुभाव्यते।
वागङ्गोपाङ्गसंयुक्तस्त्वनुभावस्ततः स्मृतः॥ नाट्यशा० ७, ५

७. अग्निपु० ३३९, ४४

८. तत्रैव ३३९, ४७

१. भावः २. हावः ३. हेला ४. शोभा ५. कान्तिः ६. दीप्तिः ७. माधुर्यम् ८. शौर्यम् ६. प्रागल्भ्यम् १०. उदारता ११. स्थैर्यम् १२. गम्भीरता च।[1] नाट्यशास्त्रेऽपीमे भेदाः प्रकारान्तरेण वर्णिताः। तत्र हि शोभाप्रभृतयोऽष्टौ पौरुषा अनुभावाः सामान्याभिनयप्रकरणे पौरुषगुणत्वेन निरूपिताः।[2] स्थैर्यगम्भीरताभ्यामृते पुराणोक्ता अन्ये दशसंख्याका भावादयो नाट्यशास्त्रे स्त्रीणां गुणत्वेन मताः।[3] स्थैर्यगाम्भीर्ये च पौरुषगुणानां मध्ये पठिते।[4]

अपि चाग्निपुराणे द्वादशेमे वागारम्भानुभावाः प्रोक्ताः —१. आलापः २. प्रलापः ३. विलापः ४. अनुलापः ५. संलापः ६. अपलापः ७. सन्देशः ८. निर्देशः ६. अतिदेशः १०. अपदेशः ११. उपदेशः १२. व्यपदेशश्च।[5] बुद्ध्यारम्भस्य रीतिवृत्तिप्रवृत्त्याख्यास्त्रयो भेदाः कथिताः।[6] शरीरारम्भानुभावे च नायकनायिकयोश्चेष्टानां समावेशः।[7] नारीपात्राणामत्रेमेः कायिकव्यापारा मताः— १. लीला २. विलासः ३. विच्छित्तिः ४. विभ्रमम् ५. किलकिञ्चितम् ६. मोट्टायितम् ७. कुट्टमितम् ८. बिब्बोकः ६. ललितम् १० विकृतम् ११. क्रीडितम् १२. केलिश्च।[8] परं भरतेनेमे स्त्रीणां स्वभावजयौवनविकारत्वेन मतास्तत्र तु केलिक्रीडितयोर्नाम्नी न स्तः।[9]

अग्निपुराणस्य शृङ्गारादिरसानां भेदोपभेदवर्णनेऽपि वैलक्षण्यं दृश्यते। अग्निपुराणे हास्यस्य षडिमे भेदाः —१. स्मितः २. हसितम् ३. विहसितम् ४. उपहसितम् ५. पापहसितम् ६. अतिहसितं च।[10] परमस्य रसस्यान्तिमौ पापहसितातिहसिताख्यौ द्वौ भेदौ भरतस्यापहसितातिहसितभेदाभ्यां भिन्नौ।[11]

---

१. तत्रैव ३३६, ४६
२. नाट्यशा० २४, ३१
३. नाट्यशा० २४, ६
४. तत्रैव २४, ३१
५. अग्निपु० ३३६, ५१-५४
६. तत्रैव ३३६, ५४
७. चेष्टाविशेषमप्यङ्गप्रत्यङ्गे कर्म चानयोः।
शरीरारम्भमिच्छन्ति प्रायः पूर्वोऽबलाश्रयः॥ अग्निपु० ३४१, १
८. तत्रैव ३४१, २-३
६. नाट्यशा० २४, १२-१३
१०. अग्निपु० ३४२, ६-११
११. (कः) सशब्दं पापहसितमशब्दमतिहासितम्। तत्रैव ३४२, ११

पुराणकारमतेनापहसितं शब्दजन्यमतिहसितं च शब्दहीनम्। परं नाट्यशास्त्रोक्तापहसितलक्षणे शब्दविषयको न कोऽपि निर्देशः। तत्र तावदपहसितस्यैव शब्दोपेतत्वमभिहितम्। अन्यच्चाग्निपुराणमतेन क्रोधस्वेदरोमाञ्चवेपथव एव रौद्ररसस्य जनयितारः।[1] किन्तु पूर्ववर्तिना केनाप्याचार्येणैवं न निर्दिष्टम्। अग्निपुराणोक्तभयानकरसस्य लक्षणमपि पूर्ववर्तिनामाचार्याणां लक्षणाद् भिन्नम्।[2]

अग्निपुराणस्य दोषप्रकरणेऽपि किञ्चिद्वैशिष्ट्यं दृष्टिपथं समायाति। पुराणेऽस्मिन् पूर्वं सर्वे दोषाः सप्तसु विभागेषु विभक्ताः। एषु सन्दिहानाविनीताज्ञात्राख्याश्चत्वारो वक्तृदोषाः पदवाक्याभिधौ द्वौ वाचकदोषौ वाच्यदोषश्च सम्मिलिताः।[3] वाच्यदोषस्यापि व्युत्पाद्यव्युत्पादितपूर्वाख्यौ द्वौ भेदौ प्रोक्तौ।[4] दोषाणामेतादृग्वर्गीकरणं कस्याचिदपि पूर्ववर्तिन आचार्यस्य रचनायां नोपलभ्यते। वामनेन रुद्रटेन चापि वाच्यवाचकदोषा निरूपिताः परं ताभ्यामेतेषां दोषाणां कृते वाच्यवाचकाविति शब्दौ न प्रयुक्तौ। काव्यालङ्कारस्य द्वितीयेऽधिकरणे वामनेनैते दोषाः—पददोषाः, पदार्थदोषा, वाक्यदोषा, वाक्यार्थदोषा इति चतुर्विधसञ्ज्ञया निर्दिष्टाः। रुद्रटेन पदवाक्यार्थाभिधास्त्रिविधा दोषाः प्रकीर्तिताः।[5] अग्निपुराणस्य साधारणप्रातिस्विकाख्यौ द्वौ वाच्यभेदावपि केनचित्पूर्ववर्तिनाऽऽचार्येण न व्यपदिष्टौ।[6] अपरश्चाग्निपुराणे केचिदेवंविधा अप्यर्थदोषा ये पूर्ववर्तिभिराचार्यैः पदस्य वाक्यस्य वा कथिताः। विसन्ध्याख्योऽर्थदोष एतादृश एव।[7] अप्रयुक्तत्वसंशयितार्थते अग्निपुराणे पददोषान्तर्गते विद्येते परं वामनेनैते वाक्यार्थदोषेषु मते।[8] अग्निपुराणवर्णिताः क्रियाभ्रंशकारकभ्रंशव्यस्त-

---

(खः) अस्थानहसितं यत्र साम्रनेत्रं तथैव च।
उत्कम्पितांसकशिरस्तच्चापहसितं भवेत्॥
संरब्धसाम्रनेत्रं च विक्रुष्टस्वरमुद्धतम्।
करोपगूढपार्श्वं च तच्चातिहसितं भवेत्॥ नाट्यशा० ६, ५८-५९

१. अग्निपु० ३४२, १३

२. आरम्भेषु भवेद् यत्र वीरमेवानुवर्तते।
भयानको नाम रसस्तस्य निर्वर्तकं भयम्॥ तत्रैव ३४२, १५

३. अग्निपु० ३४७, १-३

४. तत्रैव ३४७, २१

५. काव्यालङ्का० ६, १; १२, १

६. अग्निपु० ३४७, १३

७. अग्निपु० ३४७, १५; काव्याल० सू० वृ० २, २, ७; काव्यालङ्का० ६, १४

८. अग्निपु० ३४७, ५, ६; काव्याल० सू० वृ० २, २, २०-२१

सम्बन्धिताछान्दसत्वाविस्पष्टत्वविपर्यस्तार्थताख्या दोषा अपि पूर्ववर्तिषु ग्रन्थेषु नोदिताः ।

अग्निपुराणस्य गुणानां च वर्णनमपि पुरातनपरम्परया सार्थं न सङ्गच्छते । यद्यपि अलङ्कारसम्प्रदायस्य पूर्ववर्तिभिराचार्यैरिवाग्निपुराणकारेणापि गुणालङ्कारमध्ये न कोऽपि विशेषः प्रोक्तः परं तेनोभयोरेव काव्यशोभाधायकत्वं प्रोच्य समानं महत्त्वं प्रतिपादितम् ।[1] अत्र विद्यमानं गुणानां वर्गीकरणमपि पूर्ववर्तिनामाचार्याणां वर्गीकरणात् सर्वथा भिन्नम् । सामान्यवैशेषिकाख्यौ गुणानां द्वौ भेदावग्निपुराणात्पूर्ववर्त्तिरचनासु न विद्येते ।

अग्निपुराणे गुणानां त्रयो भेदा वर्णिताः —१. शब्दगुणाः २. अर्थगुणाः ३. उभयार्थगुणाश्च । नाट्यशास्त्रे काव्यादर्शे च गुणानां दशभेदास्तु प्रोक्ताः परं न ते तत्र केनचिच्छब्दादिवर्गविशेषेण सह सम्बद्धाः ।[2] वामनेन भरतदण्डिसम्मता दशेमे गुणाः संख्याताः —१. ओजः २. प्रसादः ३. श्लेषः ४. समता ५. समाधिः ६. माधुर्यम् ७. सौकुमार्यम् ८. उदारता ९. अर्थव्यक्तिः १०. कान्तिश्च ।[3] परमिमे गुणास्तेन शब्दार्थनिष्ठा मताः ।[4] एवं तन्मतेनैतेषां संख्या विंशतिर्जायते । अग्निपुराणकारेणैकोनविंशतिर्गुणा मताः । तेषु सप्तेमे शब्दगुणाः —१. श्लेषः २. लालित्यम् ३. गाम्भीर्यम् ४. सौकुमार्यम् ५. उदारता ६. सती ७. यौगिकी च ।[5] एतेषु शब्दगुणेषु श्लेषसौकुमार्योदारताख्यास्त्रय गुणा एव पूर्ववर्तिग्रन्थेष्ववलोक्यन्ते । अन्ये लालित्यादयश्चत्वारो गुणा अपरस्मात्कस्माच्चिदविदितस्रोतसोऽगृह्यन्तेति प्रतीयते । अत्र षडिमेऽर्थगुणाः —१. माधुर्यम् २. संविधानम् ३. कोमलत्वम् ४. उदारता ५. प्रौढिः ६. सामयिकत्वं च ।[6] माधुर्योदारते अतिरिच्यान्ये संविधानादयोऽर्थगुणा अपि नूतना एव । एवमेवात्र षडेत उभयगुणाः —१. प्रसादः २. सौभाग्यम् ३. यथासंख्यम् ४. प्रशस्यता ५. पाकः ६. रागश्च ।[7] प्रशस्यताया रागस्य च नाम्नी पूर्ववर्तिरच-

---

१. (कः) यः काव्ये महतीं छायामनुगृह्णात्यसौ गुणः । अग्निपु० ३४६, ३
(खः) काव्यशोभाकरान् धर्मानलङ्कारान् प्रचक्षते । तत्रैव ३४२, १७
२. नाट्यशा० १७, ९६; काव्याद० १, ४१
३. काव्याल० सू० वृ० ३, २, ४
४. त एवार्थगुणाः । तत्रैव २, २, १
५. अग्निपु० ३४६, ५-६
६. तत्रैव ३४६, १२
७. तत्रैव ३४६, १८-१९

नासु न दृश्येते ।

अग्निपुराणोक्ता रीतयोऽपि पूर्ववर्तिनि रीतिसम्प्रदाये वर्णिताभ्यो रीतिभ्यो विसंवदन्ति । दण्डिना द्वावेव मार्गौ (रीती) प्रधान्येन निर्दिष्टौ—१. वैदर्भः २. गौडीयश्च ।[१] वामनेन वैदर्भीगौडीयापाञ्चाल्याख्यास्तिस्रो रीतयो मताः ।[२] रुद्रटेनेमाश्चतस्रो रीतयः प्रकीर्तिताः —१. पाञ्चाली २. लाटीया ३. गौडीया ४. वैदर्भी च ।[३] अग्निपुराणेऽपि पाञ्चाली गौडदेशीया, वैदर्भी लाटजा चेति चतसृणां रीतिनां प्रतिपादनम् ।[४] रुद्रटेनेमा रीतयः समासानां न्यूनत्वप्राचुर्याभावभेदानवलम्ब्य विभक्ताः परमग्निपुराणकारेण तावदिमा अलङ्काराणां मृदुपरुषवर्णानां च परिमाणभेदमाश्रित्य निरूपिताः ।[५] अग्निपुराणस्य वृत्तीनां वर्णनमपि नाट्यशास्त्रोक्तवृत्तिभ्यो भिन्नम् । एतस्मिन् पुराणे चतस्र इमा वृत्तयः —१. भारती २. आरभटी ३. कौशिकी ४. सात्त्वती च ।[६] नाट्यशास्त्रेऽप्येत एव भेदाः ।[७] परमग्निपुराणस्य भारतीवृत्त्या लक्षणं नाट्यशास्त्रोक्तलक्षणाद् भिन्नतरम् । अग्निपुराणे भारतीवृत्तिरेवं प्रोक्ता—

**वाक्प्रधाना नरप्राया स्त्रीयुक्ता प्राकृतोक्तिका ।**
**भरतेन प्रणीतत्वाद् भारती रीतिरुच्यते ॥[८]**

एवमत्र पात्राणां कथोपकथनस्य प्राधान्यं पुरुषपात्राणां बाहुल्यं स्त्रीपात्राणामपि ग्रहणं प्राकृतभाषायाश्च प्रयोगो निर्धारितः । नाट्यशास्त्रोक्तलक्षणेऽपि संवादानां प्राधान्यं पुरुषाणां प्रयोज्यत्वं च प्रोक्तं परं तत्र स्त्रीपात्राणां निषेधस्य संस्कृतवाक्यानामेव प्रयोगस्य च विधानं विहितम् ।[९] अग्निपुराणनाट्यशास्त्रयो-

---

१. अस्त्यनेको गिरां मार्गः सूक्ष्मभेदः परस्परम् ।
तत्र वैदर्भगौडीयौ वर्ण्येते प्रस्फुटान्तरौ ॥ काव्याद० १, ४०

२. काव्याल० सू० वृ० १, २, ९

३. काव्यालङ्का० २, ४-६

४. अग्निपु० ३४०, १

५. तत्रैव ३४०, २-४

६. अग्निपु० ३४०, ५

७. नाट्यशा० २२, ११-१४

८. अग्निपु० ३४०, ६

९. या वाक्प्रधाना पुरुषप्रयोज्या
स्त्रीवर्जिता संस्कृतवाक्ययुक्ता ।
स्वनामधेयैर्भरतैः प्रयुक्ता
सा भारती नाम भवेत्तु वृत्तिः ॥ नाट्यशा० २२, २५

वीथीभेदा अपि परस्परं विसंवदन्ति। अग्निपुराणे वीथ्या इमे भेदाः —१. उद्घातकम् २. लपितम् ३. असत्प्रलापः ४. वाक्श्रेणी ५. नालिका ६. विपणम् ७. व्यवहारः ८. त्रिमतम् ९. छलम् १०. अमस्कन्दितम् ११. गण्डः १२. मृदवः १३. उचितं च।[1] नाट्यशास्त्रे चेते भेदा एवंविधाः —१. उद्घात्यकम् २. अवलगितम् ३. अवस्यन्दितम् ४. असत्प्रलापः ५. प्रपञ्चः ६. नालिका ७. वाक्केलिः ८. अधिबलम् ९. छलम् १०. व्याहारः ११. मृदवम् १२. त्रिगतम् १३. गण्डं च।[2]

## अग्न्यादिपुराणेष्वलङ्काराणां लक्षणानि प्रयोगाश्च

अग्निपुराणस्य विष्णुधर्मोत्तरपुराणस्य चानेकेष्वध्यायेष्वलङ्काराणां लक्षणान्यभिहितानि। परमत्रैतेषां निदर्शनानि नोपलभ्यन्ते। अस्मादेतयोः काव्यशास्त्रीयभागस्य न खलु तादृगुपयोगित्वं यादृक् काव्यालङ्कारकाव्यादर्शसरस्वतीकण्ठाभरणादिकाव्यशास्त्रग्रन्थानाम्। उदाहरणाभावादनयोः केषाञ्चिदलङ्काराणां स्वरूपज्ञानायान्येषां काव्यालङ्कारादिग्रन्थानामध्ययनमपेक्ष्यते, यतो हि तत्रालङ्काराणां लक्षणान्युदाहरणानि चैतदुभयमेव विलोक्यते। विष्णुमार्कण्डेयभागवतपुराणेषु चानुप्रासादिशब्दालङ्काराणामुपमाद्यर्थालङ्काराणां च भूयान् प्रयोगः समुपलभ्यते।

अस्मिन्नध्यायेऽग्निविष्णुधर्मोत्तरपुराणयोरनुप्रासाद्यलङ्कारस्य कथंविधं लक्षणं तेन च सार्धं काव्यालङ्कारकाव्यादर्शसरस्वतीकण्ठाभरणोक्तालङ्कारलक्षणस्य साम्यं वैषम्यं वेति पूर्वं प्रदर्शितम्, अनन्तरं च विष्णुमार्कण्डेयभागवतपुराणेभ्यस्तत्तदलङ्कारस्य निदर्शनान्युपात्तानि। यद्यप्यग्निपुराणेऽपि यत्र कुत्रचिदनन्वयादीनां कतिपयान्युदाहरणानि दृग्गोचरीभवन्ति[3] परमस्य पुराणस्य विश्वकोशस्वरूपत्वात् काव्यदृष्ट्या न तादृशं महत्त्वं यादृशं खलु विष्णुमार्कण्डेयभागवतपुराणानाम्। प्रधानतमानां सर्वेषामलङ्काराणामुदाहरणान्यपि नात्र दृश्यन्ते। इदमेव विष्णुधर्मोत्तरपुराणविषयेऽपि कथयितुं शक्यते। अस्मादेताभ्यां पुराणा-

---

१. अग्निपु० ३४०, ८-९

२. नाट्यशा०, २०, ११८-११९

३. रामरावणयोर्युद्धं रामरावणयोरिव। अग्निपु० १०, २३

भ्यामलङ्काराणां लक्षणान्येव तुलनात्मकायाध्ययनाय गृहीतानि ।

अत्राधोलिखिता अलङ्कारा एव विशेषाध्ययनस्य विषयीकृताः । प्रायश एषामेवैतेषु पुराणेषु प्राधान्येन वर्णनम् ।

१. अनुप्रासः २. यमकम् ३. श्लेषः ४. उपमा ५. अनन्वयः ६. रूपकम् ७. उत्प्रेक्षा ८. अतिशयोक्तिः ९. व्यतिरेकः १०. समासोक्तिः ११. व्याजस्तुतिः १२. विभावना १३. विशेषोक्तिः १४. आक्षेपः १५. विरोधः १६. स्वरूपम् १७. अर्थान्तरन्यासः १८. निदर्शना १९. दृष्टान्तः २०. प्रतिवस्तूपमा २१. समाधिः २२. यथासंख्यम् २३. पर्यायोक्तं च ।

एष्वलङ्कारेषु दृष्टान्तस्य प्रतिवस्तूपमायाश्च लक्षणे अग्निविष्णुधर्मोत्तरपुराणयोर्नोपलभ्येते परमेतयोर्निदर्शनानि विष्णवादिपुराणेषु यत्र तत्र दृष्टिपथं समायान्ति। अस्मादेतयोरपि निदर्शनान्यत्र प्रदर्शितानि काव्यालङ्कारकाव्यादर्शाभ्यां चैतयोर्लक्षणे सङ्कलिते ।

## १. अनुप्रासः

१. अग्निपुराणोक्तलक्षणम्—

**स्यादावृत्तिरनुप्रासः वर्णानां पदवाक्ययोः ।[1]**
**पदे वाक्ये च वर्णानामावृत्तिरेवानुप्रासः ।**

२. विष्णुधर्मोत्तरपुराणोक्तलक्षणम्—

**एकैकस्य तु वर्णस्य विन्यासो यः पुनः पुनः ।**
**अर्थंगत्या तु संख्यातमनुप्रासः पुरातनैः ॥[2]**

यत्र चमत्काररूपप्रयोजनविशेषादेकस्य वर्णस्यासकृन्न्यासस्तत्रानुप्रासः । विष्णुधर्मोत्तरपुराणस्येदं लक्षणं काव्यालङ्कारकाव्यादर्शसरस्वतीकण्ठाभरणस्य च लक्षणानि शब्दभेदेनाग्निपुराणोक्तानुप्रासलक्षणस्याभिप्रायमेव द्योतयन्ति ।[3]

---

१. अग्निपु० ३४३, १
२. विष्णुधपु० ३, १४, १
३. (१) सरूपवर्णविन्यासमलङ्कारं प्रचक्षते । काव्याल० २, ५
(२) वर्णावृत्तिरनुप्रासः पादेषु च पदेषु च ।
पूर्वानुभवसंस्कारबोधिनी यद्यदूरता । काव्याद० १, ५५
(३) आवृत्तिर्या तु वर्णानां नातिदूरान्तरस्थिता ।
अलङ्कारः स विद्वद्भिरनुप्रासः प्रदर्श्यते ॥ सरस्वतीक० २, ७०

अस्यालङ्कारस्य विष्णुभागवतपुराणयोः प्राचुर्येण प्रयोगः। मार्कण्डेय-पुराणे तु यत्रकुत्रचिदेव।

१. विष्णुपुराणे—

स एव सृज्यः स च सर्गकर्ता
स एव पात्यत्ति च पाल्यते च।
ब्रह्माद्यवस्थाभिरशेषमूर्त्ति-
र्विष्णुर्वरिष्ठो वरदो वरेण्यः॥[1]

अत्र सकारवकाररेफाणामसकृदावृत्तिः पकारस्य च सकृदावृत्तिरत एवात्रानुप्रासः।

गुणाञ्जन गुणाधार निर्गुणात्मन् गुणस्थित।
मूर्त्तामूर्त्तमहामूर्त्ते सूक्ष्ममूर्त्ते स्फुटास्फुट॥[2]

अत्र गणमसरत-व्यञ्जनानामसकृदावृत्तिः फटयोश्च सकृदावृत्तिरत-एवात्रानुप्रासः।

२. भागवतपुराणे—

वयं तु न वितृप्याम उत्तमश्लोकविक्रमे।
यच्छृण्वतां रसज्ञानां स्वादु स्वादु पदे पदे॥[3]

अत्र वयतम-व्यञ्जनानामसकृदावृत्तिः। स्वाद्विति पदमिति च व्यञ्जन-सङ्घयोः सकृदावृत्तिः। अतएवात्रानुप्रासः।

अहं भवो यज्ञ इमे प्रजेशा
दक्षादयो ये भवदादयश्च।
स्वर्लोकपालः खगलोकपाला
नृलोकपालास्तललोकपालाः॥[4]

अत्र प्रथमद्वितीयचरणस्थयकारस्यासकृदावृत्तिस्तत्रैव भव इति व्यञ्जन-सङ्घस्य सकृदावृत्तिः। अन्तिमयोर्द्वयोश्च चरणयोर्लोकपाला इति व्यञ्जनसङ्घस्यास-कृदावृत्तिरस्मादत्रानुप्रासोऽलङ्कारः।

---

१. विष्णुपु० १, २, ७०
२. तत्रैव १, २०, १०
३. भागवतपु० १, १, १९
४. तत्रैव, २, ६, ४३

३. **मार्कण्डेयपुराणे—**

**पद्मप्रभाः पद्मगन्धा जम्बुफलरसाशिनः ।**
**पद्मपत्रायताक्षास्तु जायन्ते तत्र मानवाः ॥**[१]

अत्र पद्म इति व्यञ्जनसङ्घस्यासकृदावृत्तिः । तकाररेफयोर्यकारस्य (जकारस्यापि तालावुच्चार्यमाणत्वाद् यकारेण सादृश्यत्वात्) चाप्यसकृदावृत्तिः ।

## २. यमकम्

अग्निपुराणोक्तलक्षणम्—

**अनेकवर्णावृत्तिर्या भिन्नार्थप्रतिपादिका ।**
**यमकम् · · · · ॥**[२]

यत्र पृथगर्थानामनेकेषां वर्णानामावृत्तिर्जायते तत्र यमकालङ्कारः ।

विष्णुधर्मोत्तरपुराणोक्तलक्षणम्—

**शब्दाः समानानुपूर्व्या यमकं कीर्त्तितं पुनः ॥**[३]

यत्र वर्णाः केनचित् क्रमविशेषेणावर्तन्ते तत्र यमकम् । काव्यालङ्कारे तुल्यश्रुतीनां भिन्नार्थकानां वर्णानामावृत्तिः ।[४] काव्यादर्शे च वर्णसङ्घातगोचराऽऽवृत्तिर्यमकत्वेन मता ।[५] सरस्वतीकण्ठाभरणेऽपि विभिन्नार्थैकरूपा वर्णसङ्घस्यावृत्तिर्यमकम् ।[६] अपि चाग्निपुराणे सरस्वतीकण्ठाभरण इव व्यपेताव्यपेताख्यौ यमकस्य द्वौ भेदौ दृश्येते ।[७]

अग्निपुराणेऽस्यालङ्कारस्याव्यपेतादयो दशभेदाः प्रोक्ताः ।[८]

---

१. मार्कण्डेयपु० ५७, ६

२. अग्निपु०, ३४३, ११

३. विष्णुधपु० ३, १४, २

४. तुल्यश्रुतीनां भिन्नानामभिधेयैः परस्परम् ।
वर्णानां यः पुनर्वादो यमकं तन्निगद्यते ॥ काव्याल० २, १७

५. आवृत्तिं वर्णसंघातगोचरां यमकं विदुः ॥ काव्याद० १, ६१

६. विभिन्नार्थैकरूपाया याऽऽवृत्तिर्वर्णसंहतेः ।
अव्यपेतव्यपेतात्मा यमकं तन्निगद्यते ॥ सरस्वतीक० २, ५८

७. यमकं साऽव्यपेतं च व्यपेतं चेति तद् द्विधा ।
आनन्तर्यादव्यपेतं व्यपेतं व्यवधानतः ॥ अग्निपु० ३४३, १२

८. अग्निपु० ३४३, १२-१७

तेषां चेमानि नामानि—

| | |
|---|---|
| १. अव्यपेतम् | २. व्यपेतम् |
| ३. पादान्तयमकम् | ४. काञ्चीयमकम् |
| ५. संसर्गयमकम् | ६. विक्रान्तयमकम् |
| ७. पादादियमकम् | ८. आम्रेडितम् |
| ९. चतुर्व्यवसितम् | १०. मालायमकं च। |

अस्यालङ्कारस्योदाहरणानि त्रिषु पुराणेषु स्तोकमात्रमुपलभ्यन्ते।

१. **अव्यपेतयमकम्**—विष्णुपुराणे—

**करालसौम्यरूपात्मन् विद्याविद्यामयाच्युत।**
**सदसद्रूपसद्भाव सदसद्भावभावन॥**[1]

विद्याविद्यामयेत्यत्र पूर्वो विद्याशब्दो ज्ञानार्थक उत्तरश्च (वस्तुतोऽयम-विद्येति शब्दः) अज्ञानार्थकः कर्मार्थको वा। चतुर्थे चरणे भावभावनेत्यत्र भाव-शब्दस्यावृत्तिः, पूर्वो भावशब्दः सार्थक उत्तरश्च निरर्थकः। अत्र पदयोरव्यवधा-नेनावृत्तिरतएवाव्यपेतयमकम्।

२. **व्यपेतयमकम्**—भागवतपुराणे—

**धराधरोष्ठो जलदोत्तरोष्ठो-**
**दर्याननान्तो गिरिश्रृङ्गदंष्ट्रः॥**[2]

अत्र रोष्ठो—इति निरर्थकस्य पदसङ्घातस्य व्यवधानेनावृत्तित्वाद् व्यपेतयमकम्।

## ३. श्लेषः

अग्निपुराणे नास्य किमपि लक्षणम्। विष्णुधर्मोत्तरपुराणोक्त-लक्षणम्—

**द्वित्र्यर्थं वाचकैः शब्दैः श्लेष इत्यभिधीयते॥**[3]

अर्थवाचकैः (सार्थकैः) शब्दैर्द्वयोस्त्रयाणां वाऽर्थानामभिसूचनं श्लेष

---

१. विष्णुपु० १, २०, ११
२. भागवतपु० १०, १२, १७
३. विष्णुधपु० ३, १४, ६

इत्युच्यते। एतत्तु केवलं शब्दश्लेषस्यैव लक्षणं नार्थश्लेषस्य। काव्यालङ्कारमतेनालङ्कारोऽयमौपम्यगर्भः। यदोपमानेनोपमेयस्य कृते गुणक्रियाभ्यां नाम्ना वा तत्समानधर्मता जायते तदा श्लेषः।[1] काव्यादर्शस्य श्लेषलक्षणं शब्दश्लेषमर्थश्लेषं चोभावपि बोधयति।[2] सरस्वतीकण्ठाभरणस्य लक्षणं विष्णुधर्मोत्तरपुराणस्य काव्यादर्शस्य च लक्षणे अनुसरति।[3] परं तत्रानेकार्थस्य सीमाद् व्यर्थाभिसूचनपरिमिता जाता।

विष्णुमार्कण्डेयपुराणयोरेष यत्रकुत्रचिदेवोपलभ्यते परं भागवतेऽस्य प्राचुर्येण प्रयोगः।

विष्णुपुराणस्य कंसवधप्रसङ्गे रामकृष्णयो रङ्गप्रवेशवर्णनम्—

**मृगमध्ये यथा सिंहौ गर्वलीलावलोकिनौ।**
**प्रविष्टौ सुमहारङ्गं बलभद्रजनार्दनौ॥**[4]

अत्र गर्वलीलावलोकिनाविति पदमुभयोः पक्षयोः समानम्। अत्रार्थश्लेषः। अस्मिन्नेव पुराणे प्रलयवर्णनम्—

**अम्बरीषमिवाभाति त्रैलोक्यमखिलं तदा।**
**ज्वालावर्तपरीवारमुपक्षीणचराचरम्॥**[5]

अत्र ज्वालावर्तपरीवारमित्यम्बरीषत्रैलोक्यपक्षयोः समानम्। (अम्बरीषम्=कटाहः, परीवारः=परिवारणम्=आच्छादनम्)।

मार्कण्डेयपुराणस्य हरिश्चन्द्रोपाख्याने श्मशाने शैव्याहरिश्चन्द्रयोर्वर्णनम्

**सापि तं चारुकेशान्तं पुरा दृष्ट्वा जटालकम्।**
**नाभ्यजानान्नृपसुता शुष्कवृक्षोपमं नृपम्॥**[6]

अत्र जटालकमिति शब्दे शब्दश्लेषः (राजपक्षे जटालकम्—जटेव वृक्ष-

---

१. उपमानेन यत्तत्त्वमुपमेयस्य साध्यते।
गुणक्रियाभ्यां नाम्ना च श्लिष्टं तदभिधीयते॥ काव्याल० ३, १४

२. श्लिष्टमिष्टमनेकार्थमेकरूपान्वितं वचः॥ काव्याद० २, ३१०

३. एकरूपेण वाक्येन द्वयोर्भणनमर्थयोः।
तन्त्रेण यत्स शब्दज्ञैः श्लेष इत्यभिशब्दितः॥ सरस्वतीक० २, ६८

४. विष्णुपु० ५, २०, ४३

५. तत्रैव ६, ३, २७

६. मार्कण्डेयपु० ८, १७६

शटेवालकं केशरचना यस्य स तम् । वृक्षपक्षे—जटालकम् = जटिलम्—सटायुक्तम्) ।

भागवतपुराणे कर्दमो मुनिः स्वायम्भुवं मनुं प्रीणयन्नेवं कथयति—

**स्वसैन्यचरणक्षुण्णं वेपयन्मण्डलं भुवः ।**
**विकर्षन् बृहतीं सेनां पर्यटस्यंशुमानिव ।।**[1]

अत्र वेपयन्निति शब्दे श्लेषः (सूर्यपक्षे वेपयन् = चालयन् सूर्यो हि स्वयं स्थितः सन् पृथिवीं गमयति, राजपक्षे वेपयन् = कम्पयन् ) ।

अस्यैव पुराणस्यावधूतोपाख्याने सागरगुणवर्णनम्—

**समृद्धकामो हीनो वा नारायणपरो मुनिः ।**
**नोत्सर्पेत न शुष्येत सरिद्भिरिव सागरः ।।**[2]

अत्रोत्सर्पेतेति शुष्येतेति च पदयोरर्थे श्लेषः ।

(मुनिपक्षे उत्सर्पेत=हृष्येत्, शुष्येत=शोचेत् । सागरपक्षे उत्सर्पेत=वेलामतिक्रम्य बहिर्गच्छेत्, शुष्येत=शोषं गच्छेत्) ।

अस्मिन्नेव पुराणे हर्यश्वानामाध्यात्मिकविषयाणां चिन्तनस्य वर्णनम्—

**नानारूपात्मनो बुद्धिः स्वैरिणीव गुणान्विता ।**
**तन्निष्ठामगतस्येह किमसत्कर्मभिर्भवेत् ।।**[3]

अत्र नानारूपेति गुणान्वितेति च पदयोः श्लेषः ।

(बुद्धिपक्षे—नानारूपा = घटपटादिनानारूपधारिणी, गुणान्विता = सत्त्वरजस्तमसावृता, स्वैरिणीपक्षे—नानारूपा = नानावेशधारिणी, गुणान्विता = शोभाकान्त्यादिभिः स्त्रीणामलङ्कारभूतैर्गुणैर्विभूषिता ) ।

## ४. उपमा

अग्निपुराणोक्तलक्षणम्—

**उपमा नाम सा यस्यामुपमानोपमेययोः ।**
**सत्ता चान्तरसामान्ययोगित्वेऽपि विवक्षितम् ।।**

---

१. भागवतपु० ३, २१, ५३

२. तत्रैव ११, ८, ६

३. तत्रैव ६, ५, १४

**किञ्चिदादाय सारूप्यं लोकयात्रा प्रवर्तते ।**[1]

यत्रोपमानोपमेययोः सत्यपि भेदे तयोर्मध्ये सादृश्यास्तित्वमुपलभ्यते तत्रोपमालङ्कारः । उपमानोपमेययोर्यत्किञ्चित्साम्यं दृश्यते तदेव गृहीत्वोपमालङ्कारस्यालङ्कारत्वेन व्यवहारो यतो हि सर्वथा सदृशी केचिदपि द्वे वस्तुनी जगति नोपलभ्येते ।

उपमालङ्कारस्य वर्णनं प्रायशः सर्वेष्वेवालङ्कारग्रन्थेषु विलोक्यते । परं विष्णुधर्मोत्तरपुराणे नास्य किमपि लक्षणम् । अत्र तु केवलमनन्वयालङ्कारप्रसङ्गत एवोपमाशब्दस्य प्रयोगः ।[2]

काव्यालङ्कारोक्तलक्षणेऽग्निपुराणोक्तलक्षणनिहितार्थस्यैव प्रतिपादनं दृश्यते तत्रापि गुणलेशेन साम्यत्वादुपमा जायते कामं तत्र देशकालक्रियादिभिर्भेदो विधीयेत ।[3] यत्रोपमानोपमेययोर्यथाकथञ्चित्सादृश्यं कल्पनयोद्भाव्यते तत्रोपमालङ्कार इति काव्यादर्शमतम् ।[4] अत्रापि स्वल्पं सादृश्यमेवोपमानोपमेययोरिति स्वीकृतम् । परं सरस्वतीकण्ठाभरणमतेन किञ्चित्सादृश्यमेवोपमेति न पर्याप्तम् । तत्तु तस्याः कृते भूयोऽवयवसामान्ययोगत्वमीहते । परमेष योग उपमानोपमेययोः सामान्यधर्मस्य प्रसिद्धिमप्यपेक्षते ।[5]

अग्निपुराणेऽस्यालङ्कारस्येमेऽष्टादशभेदाः सलक्षणं प्रोक्ताः—

| | |
|---|---|
| १. धर्मवस्तूपमा | २. परस्परोपमा |
| ३. विपरीतोपमा | ४. नियमोपमा |
| ५. अनियमोपमा | ६. समुच्चयोपमा |

---

१. अग्निपु० ३४४, ६-७

२. विना तथा स्यादुपमा तु यत्र
तेनैव तस्यैव भवेन्नृवीर ।
अनन्वयाख्यं कथितं पुराणै-
रेतावदुक्तं तव लेशमात्रम् ॥ विष्णुधपु० ३, १४, १५

३. विरुद्धेनोपमानेन देशकालक्रियादिभिः ।
उपमेयस्य यत्साम्यं गुणलेशेन सोपमा ॥ काव्याल० २, ३०

४. यथाकथञ्चित्सादृश्यं यत्रोद्भूतं प्रतीयते ।
उपमा नाम सा तस्याः प्रपञ्चोऽयं प्रदर्श्यते ॥ काव्याद० २, १४

५. प्रसिद्धेरनुरोधेन यः परस्परमर्थयोः ।
भूयोऽवयवसामान्ययोगः सेहोपमा मता ॥ सरस्वतीक० ४, ६

| | |
|---|---|
| ७. व्यतिरेकोपमा | ८. बहूपमा |
| ९. मालोपमा | १०. विक्रियोपमा |
| ११. अद्भुतोपमा | १२. मोहोपमा |
| १३. संशयोपमा | १४. निश्चयोपमा |
| १५. वाक्यार्थोपमा | १६. असाधारण्युपमा |
| १७. अन्योपमा | १८. गगनोपमा च। |

अग्निपुराणे वर्णिता उपमाया इमे भेदा ऋते गगनोपमायाः सर्वे काव्यादर्शे विलोक्यन्ते। एषां भेदानां लक्षणेष्वपि साम्यं दृश्यते। काव्यालङ्कारेऽस्या उपमायाः पृथग्भेदा न वर्णिताः। सरस्वतीकण्ठाभरणेऽप्येष विभागोऽन्यविध एव। अस्याग्निपुराणविभागेन सह न कोऽपि संवादः।

अस्यालङ्कारस्य प्रयोगो विष्णुमार्कण्डेयभागवतेषु त्रिष्वेव पुराणेषु प्राचुर्येण विहितः। विष्णुपुराणेऽस्यालङ्कारस्य प्रयोगसंख्योपशतं, मार्कण्डेयपुराणे ह्येषोपत्रिंशद्, भागवतपुराणे चोपत्रिशतम्।

इदानीमुपमायाः कतिपयभेदानधिकृत्य विचार्यते।

**धर्मवस्तूपमा**—अग्निपुराणोक्तलक्षणम्—

**यत्र साधारणो धर्मः कथ्यते गम्यतेऽपि वा।**
**ते धर्मवस्तुप्राधान्याद्धर्मवस्तूपमे उभे॥**[1]

यत्र तुल्यधर्मः (केनचिच्छब्देन) अभिधया प्रोच्यते तत्र धर्मोपमा, यत्र च (शब्देनानुपादानाद्) तुल्यधर्मः केवलं गम्यते तत्र वस्तूपमा (वस्तुनोरुपमानोपमेययोरुपादानादियं वस्तूपमा)।

काव्यादर्शेऽपि यत्र साक्षाच्छब्देन तुल्यधर्मप्रदर्शनं विधीयते तत्र धर्मोपमा निगदिता।[2] यत्र यत्र च शब्देनानुपादानात्साधारणधर्मो गम्यमानस्तत्र वस्तूपमा प्रोक्ता।[3]

---

१. अग्निपु० ३४४, १०

२. अम्भोरुहमिवाताम्रं मुग्धे करतलं तव।
इति धर्मोपमा साक्षात्तुल्यधर्मप्रदर्शनात्॥ काव्याद० २, १५

३. राजीवमिव ते वक्त्रं नेत्रे नीलोत्पले इव।
इयं प्रतीयमानैकधर्मा वस्तूपमैव सा॥ तत्रैव २, १६

१. (क:) धर्मोपमा—

भागवतपुराणे सूर्यानुकम्पया स्यमन्तकमणिं प्राप्य तां बिभ्रन् सत्राजिद् द्वारकामाययौ—

**स तं बिभ्रन् मणिं कण्ठे भ्राजमानो यथा रविः ।**
**प्रविष्टो द्वारकां राजंस्तेजसा नोपलक्षितः ॥**[1]

अत्र स इत्युपमेयं रविरित्युपमानं यथेत्यौपम्यवाचकः शब्दो भ्राजमानश्चेति विशेषणं साधारणधर्मबोधकम्। अयं च साधारणो धर्मोऽत्र भ्राजमान इति शब्देन साक्षात् (अभिधया) प्रोक्तोऽस्मादत्र धर्मोपमा।

(ख:) वस्तूपमा—

भागवतपुराणे वृत्रासुरवधप्रसङ्गे देवराजेन्द्रस्य पराक्रमवर्णनम्—

**स तु वृत्रस्य परिघं करं च करभोपमम् ।**
**चिच्छेद युगपद् देवो वज्रेण शतपर्वणा ॥**[2]

अत्र करभोपमस्य करस्य मनोज्ञत्वपीनत्वादिसाधारणा धर्मा गम्यमाना एव न ते साक्षात्केनचिच्छब्देन प्रोक्ताः। अतएवात्र वस्तूपमा।

२. बहूपमा—

अग्निपुराणोक्तलक्षणम्—

**यत्रोपमा स्याद् बहुभिः सदृशैः सा बहूपमा ॥**[3]

यत्र बहुभिरुपमानैः सहोपमेयमुपमीयते तत्र बहूपमा। काव्यादर्शेऽपि योपमैकस्योपमेयस्य बहूपमाननिबन्धनात्तयोरुपमानोपमेययोः साम्यबोधयित्री सा बहूपमेति प्रोक्ता।[4]

कंसेन गोकुलं प्रहितोऽक्रूरस्तत्र गत्वा बलभद्रं ददर्श। एतदेव वर्णनं विष्णुपुराणस्यास्मिन् श्लोके—

**हंसकुन्देन्दुधवलं नीलाम्बरधरं द्विज ।**
**तस्यानु बलभद्रं च ददर्श यदुनन्दनम् ॥**[5]

---

१. भागवतपु० १०, ५६, ४
२. तत्रैव ६, १२, २५
३. अग्निपु० ३४४, १४
४. चन्दनोदकचन्द्रांशुचन्द्रकान्तादिशीतलः।
स्पर्शस्तवेत्यतिशयं बोधयन्ती बहूपमा ॥ काव्याद० २, ४०
५. विष्णुपु० ५, १७, २३

अत्र हंसकुन्देन्दुभिर्बहुभिरुपमानैः सह बलभद्र इत्युपमेयस्य सादृश्य-वर्णनम् ।

भागवतपुराणे कृष्णतिरोभावानन्तरं विरहातुरस्यार्जुनस्य युधिष्ठिरं प्रति करुणोक्तिरियम्—

**तद्वै धनुस्त इषवः स रथो हयास्ते**
**सोऽहं रथी नृपतयो यत आनमन्ति ।**
**सर्वं क्षणेन तदभूदसदीशरिक्तं**
**भस्मन् हुतं कुहकराद्धमिवोप्तमूष्याम् ।।**[1]

अत्र भस्मन् हुतं कुहकराद्धमूष्यामुप्तं चेति सर्वमुपमानं धनुरादिवाचकं सर्वमिति च पदमुपमेयम् । अत्रैकस्योपमेयस्य कृते बहूनामुपमानानां प्रयुक्तत्वाद् बहूपमा ।

३. **संशयोपमा**

अग्निपुराणोक्तलक्षणम् —

**उभयोर्धर्मिणोस्तथ्यानिश्चयात्संशयोपमा ।**[2]

यत्रोपमानोपमेययोर्विशेषधर्मस्याप्रतीतेस्तथ्यविनिश्चयो न संभवेत् तत्र संशयोपमा । काव्यादर्शेऽपि यत्र विरुद्धनानार्थावगाहिचेतसो दोलायमानत्वं तत्र संशयोपमा निगदिता ।[3]

भागवतपुराणस्य पुरञ्जनोपाख्याने पुरञ्जनः सुन्दरीं बालां विलोक्य तामेवं पृच्छति—

**त्वं ह्रीर्भवान्यस्यथ वाग्रमा पतिं**
**विचिन्वती किं मुनिवद्रहो वने ।**
**त्वदङ्घ्रिकामाप्तसमस्तकामं**
**क्व पद्मकोशः पतितः कराग्रात् ॥**[4]

अत्र त्वं ह्रीरथवा भवानी वाग् (सरस्वती) वा रमा वा असीत्येवं कथयन्

---

१. भागवतपु० १, १५, २१

२. अग्निपु० ३४४. १८

३. किं पद्ममन्तर्भ्रान्तालि किं ते लोलेक्षणं मुखम् ।
मम दोलायते चित्तमितीयं संशयोपमा ॥ काव्याद० २, २६

४. भागवतपु० ४, २५, २८

पुरञ्जनः संशयपदवीमापन्नो न किमपि निश्चेतुं शक्नोति । अतएव तथ्यानिश्चयादत्र संशयोपमा ।

४. **निश्चयोपमा**

अग्निपुराणोक्तलक्षणम्—

**उपमेयस्य संशय्य निश्चयान्निश्चयोपमा ॥**[1]

यत्रोपमेये संशयमुद्भाव्य निश्चयः प्रदर्श्यते तत्र निश्चयोपमा ।

काव्यादर्शेऽस्या उपमाया निर्णयोपमेति संज्ञा । तन्मतेन यत्र प्रथमं संशयं परिकल्प्यानन्तरं च निश्चायकहेतुं प्रस्तूय निर्णयो विधीयते तत्र निर्णयोपमा (=निश्चयोपमा) मता ।[2]

भागवतपुराणस्यास्मिन्नेव (उपर्युक्ते) पुरञ्जनोपाख्याने संशयानन्तरं निश्चयमापन्नः सन् पुरञ्जनोऽग्रे कथयति—

**नासां वरोर्वन्यतमा भुविस्पृक्**
**पुरीमिमां वीरवरेण साकम् ।**
**अर्हस्यलङ्कर्तुमदभ्रकर्मणा**
**लोकं परं श्रीरिव यज्ञपुंसा ॥**[3]

वरोरु (त्वम्) आसाम् (लज्जोमारमासरस्वतीनाम्) अन्यतमा नासि यतस्त्वं भुविस्पृक् (अन्यास्तु देवयोनित्वाद् दिवौकसः) इति कथनेन त्वं मानवीति निश्चयो जायते । अतएव निश्चयगर्भित्वादत्र निश्चयोपमा ।

एवमेवाग्निपुराणोक्तान्येषामुपमाभेदानामन्यानि निदर्शनान्यपि विष्णवादिपुराणत्रये यत्र तत्रोपलभ्यन्ते ।

## ५. अनन्वयः

अग्निपुराणेऽस्यालङ्कारस्य न किमपि लक्षणम् ।

विष्णुधर्मोत्तरपुराणोक्तलक्षणम्—

**विना तथा स्यादुपमा तु यत्र**
**तेनैव तस्यैव भवेन्नृवीर ।**

---

१. अग्निपु० ३४४, १८

२. न पद्मस्येन्दुनिग्राह्यस्येन्दुलज्जाकरीद्युतिः ।
अतस्त्वन्मुखमेवेदमित्यसौ निर्णयोपमा ॥ काव्याद० २, २७

३. भागवतपु० ४, २५, २६

**अनन्वयाख्यं कथितं पुराणै-**
**रेतावदुक्तं तव लेशमात्रम् ॥**[1]

यत्र केनचिदन्येनोपमानेन विना, तस्यैवोपमेयस्य तेनैवोपमेयेन सार्धमुपमा विधीयते तत्रानन्वयालङ्कारः। काव्यालङ्कारस्य लक्षणमप्यनेन लक्षणेन सह संवदति। तन्मते यत्रान्यासादृश्यविवक्षात उपमेय एवोपमानोपमेयता विलोक्यते तत्रायमलङ्कारः।[2] सरस्वतीकण्ठाभरणेऽयमुपमालङ्कारस्यैको भेदः प्रकीर्तितः। अस्मात्तत्रास्य पृथग् लक्षणमनाख्यायोदाहरणमेव प्रदर्शितम्।[3]

अस्यालङ्कारस्य त्रिषु पुराणेष्वल्पीयान् प्रयोगो दृश्यते। विष्णुपुराणे पाताललोकवर्णनप्रसङ्गे नारदस्येयमुक्तिः—

**स्वर्लोकादपि रम्याणि पातालानीति नारदः।**
**प्राह स्वर्गसदां मध्ये पातालेभ्यो गतो दिवि ॥**
**आह्लादकारिणः शुभ्रा मणयो यत्र सुप्रभाः।**
**नागाभरणभूषासु पातालं केन तत्समम् ॥**[4]

अत्र पातालसादृश्यद्योतकस्यान्यस्योपमानाभावादनन्वयालङ्कारः।

भागवतपुराणे द्वारकावर्णनप्रसङ्गे मधुभोजादीनां पराक्रमकथनम्—

**मधुभोजदशार्हार्हकुकुरान्धकवृष्णिभिः।**
**आत्मतुल्यबलैर्गुप्तां नागैर्भोगवतीमिव ॥**[5]

अत्रात्मतुल्यबलैरिति पदेऽनन्वयोपमा। आत्मैव तुल्यबलो येषां ते तथाभूतास्तेषां बलस्योपमा नान्यत्र शक्यते द्रष्टुमित्यर्थः।

---

१. विष्णुधपु० ३, १४, १५

२. यत्र तेनैव तस्य स्यादुपमानोपमेयता।
असादृश्यविवक्षातस्तमित्याहुरनन्वयम् ॥ काव्याल० ३, ४५

३. त्वन्मुखं त्वन्मुखमिव त्वद्दृशौ त्वदृशाविव।
त्वन्मूर्तिरिव मूर्त्तिस्ते त्वमिव त्वं कृशोदरि ॥ सरस्वतीक० ४, २३
कारिकाया गद्यभागे २४ तममुदाहरणम्

४. विष्णुपु० २, ५, ५-६

५. भागवतपु० १, ११, ११

## ६. रूपकम्

अग्निपुराणोक्तलक्षणम्—

**उपमानेन यत्तत्त्वमुपमेयस्य रूप्यते ।**
**गुणानां समतां दृष्ट्वा रूपकं नाम तद्विदुः ॥**
**उपमैव तिरोभूतभेदा रूपकमेव वा ।**[1]

यदा गुणसाम्यं विलोक्य कविना सादृश्यातिशयस्य प्रदर्शनायोपमानेन तदीयविशेषधर्मः (उपमानस्य विशेषो धर्मः) उपमेयस्य कृते (उपमेये वा) निरूप्यते (ताद्रूप्यसम्बन्धेन निधीयते) तदा रूपकमलङ्कारः। अथवा यस्यामुपमायां कविना सादृश्यातिशयप्रदर्शनायोपमानोपमेययोर्विद्यमानोऽपि भेदो निगुह्यते सा रूपकालङ्काराभिख्यां याति।[2]

विष्णुधर्मोत्तरपुराणोक्तलक्षणम्—

**उपमानेन तुल्यत्वमुपमेयस्य रूपकम् ॥**[3]

उपमानेन सहोपमेयस्य (ताद्रूप्यात्) तुल्यत्वम् (सादृश्यम्) रूपकमुच्यते। विष्णुधर्मोत्तरपुराणस्येदं लक्षणं संक्षिप्तत्वात्स्पष्टमर्थं न गमयति।

काव्यालङ्कारस्य रूपकलक्षणमग्निपुराणस्य प्रथमेन रूपकलक्षणेन सह सर्वथा संवदति।[4] एवमेव काव्यादर्शस्य रूपकलक्षणमग्निपुराणस्य द्वितीयरूपकलक्षणेन सह सर्वथा सङ्गच्छते।[5] सरस्वतीकण्ठाभरणमतेन यदोपमानपदानां

---

१. अग्निपु० ३४४, २२-२३

२. काव्यादर्शस्य प्रभाटीकायामग्निपुराणोक्तरूपकलक्षणमेवमुद्धृतं विलोक्यते—अत एवाग्नेये—

उपमानस्य तत्त्वं यदुपमेये तु रूप्यते ।
गुणानां समतां दृष्ट्वा रूपकं नाम तद्विदुः ॥ ३४४, २२

काव्याद० प्रभा टीका २, ६६, गद्यभागे, पृ० १५६

तत्रैव रूपकस्य व्युत्पत्तिनिमित्तोऽयमर्थः—रूपकम् रूपयति उपमानोपमेययोरेकतां नयति इति रूपकम् तन्नामालङ्कारः। पृ० १५७, गद्यभागः।

३. विष्णुधपु० ३. १४, ४

४. उपमानेन यत्तत्त्वमुपमेयस्य रूप्यते ।
गुणानां समतां दृष्ट्वा रूपकं नाम तद्विदुः ॥ काव्याल० २, २१

५. उपमैव तिरोभूतभेदा रूपकमुच्यते ॥ काव्याद० २, ६६

गौणीलक्षणयोपमेयेषु बोधकता भवेत्तदा रूपकं जायते।[1] अत्रापि ताद्रूप्यसम्बन्धस्वीकारः।

अस्यालङ्कारस्य त्रिषु पुराणेषु भूयान् प्रयोगो दृश्यते। विष्णुमार्कण्डेयपुराणयोरेष उपपञ्चदशप्रसंगेषु व्यवहृतः, भागवतपुराणे चोपाशीति संख्यामधिगतः।

विष्णुपुराणे कृष्णजन्मवर्णनम्—

**ततोऽखिलजगत्पद्मबोधायाच्युतभानुना।**
**देवकीपूर्वसन्ध्यायामाविर्भूतं महात्मना॥[2]**

अत्रोपमानोपमेयभूतयोर्जगत्पद्मनी इति अच्युतभानू इति देवकीपूर्वसन्ध्ये इति च शब्दयोस्ताद्रूप्यसम्बन्धाद्रूपकमलङ्कारः।

विष्णुपुराणे कृष्णे मथुरायां गतवति गोकुलाङ्गनानामियमुक्तिः—

**सुप्रभाताद्य रजनी मथुरावासियोषिताम्।**
**पास्यन्त्यच्युतवक्त्राब्जं यासां नेत्रालिपंक्तयः॥[3]**

अत्राप्युपमानोपमेयभूतयोरच्युतवक्त्राब्जयोर्नेत्रालिपंक्त्योश्च ताद्रूप्याद्रूपकम्।

मार्कण्डेयपुराणे जैमिनिर्मुनिर्महाभारतस्य माहात्म्यं मार्कण्डेयं मुनिमेवं निवेदयति—

**कलशब्दमहाहंसं महाख्यानपराम्बुजम्।**
**कथाविस्तीर्णसलिलं कार्ष्णं वेदं महाह्लदम्॥[4]**

अत्र कलशब्दमहाहंसमिति पदे कलशब्दमहाहंसौ, महाख्यानपराम्बुजमिति पदे महाख्यानपराम्बुजे, कथाविस्तीर्णसलिलमिति पदे कथाविस्तीर्णसलिले कार्ष्णं वेदं महाहृदं चेति सर्वाणि पदान्युपमानोपमेयानि। एषु च ताद्रूप्यादत्र रूपकमलङ्कारः।

---

१. यदोपमानशब्दानां गौणवृत्तिव्यपाश्रयात्।
उपमेये भवेद् वृत्तिस्तदा तद्रूपकं विदुः॥ सरस्वतीक० ४, २४

२. विष्णुपु० ५, ३, २

३. तत्रैव ५, १८, २४

४. मार्कण्डेयपु० १, ११

भागवतपुराणस्य मङ्गलाचरणश्लोकेष्वन्यतमोऽयं श्लोकः—

**निगमकल्पतरोर्गलितं फलं**
**शुकमुखादमृतद्रवसंयुतम् ।**
**पिबत भागवतं रसमालयं**
**मुहुरहो रसिका भुवि भावुकाः ॥**[1]

अत्रोपमानोपमेयभूतयोर्निगमकल्पतरुशब्दयोस्ताद्रूप्यसम्बन्धः । शुकमुखादिपदे च श्लेषत्वादयमर्थः —शुकदेवरूपिणः शुकस्य मुखात् । अत्राप्युपमानोपमेयभूतयोः शुकशुकदेवयोस्ताद्रूप्यम् । अस्मादत्र रूपकमलङ्कारः ।

भागवतपुराणे यज्ञावसरे शिवमवगणयन्तं स्वपितरं शिवस्य महिमानं वेदयन्ती सती कथयति—

**यत्पादपद्मं महतां मनोऽलिभि-**
**र्निषेवितं ब्रह्मरसासवार्थिभिः ।**
**लोकस्य यद्वर्षति चाशिषोऽर्थिन-**
**स्तस्मै भवान् द्रुह्यति विश्वबन्धवे ॥**[2]

अत्र मनोऽलिभिरितिपदेऽलिमनसी, पादपद्ममिति पदे च पादपद्मनी इति शब्दावुपमानोपमेयभूतौ तयोश्च ताद्रूप्यादत्र रूपकमलङ्कारः ।

## ७. उत्प्रेक्षा

अग्निपुराणोक्तलक्षणम्—

**अन्यथोपस्थिता वृत्तिश्चेतनस्येतरस्य च ।**
**अन्यथा मन्यते यत्र तामुत्प्रेक्षां प्रचक्षते ॥**[3]

चेतनस्याचेतनस्य वा वास्तवरूपमपहायाप्रस्तुतस्वरूपेणोपस्थितोपमैवोत्प्रेक्षा ।

विष्णुधर्मोत्तरपुराणोक्तलक्षणम्—

**अन्यरूपस्य चार्थस्य कल्पना यान्यथा भवेत् ।**
**उत्प्रेक्षाख्यो ह्यलङ्कारः कथितः स पुरातनैः ॥**[4]

---

१. भागवतपु० १, १, ३
२. तत्रैव ४, ४, १५
३. अग्निपु० ३४४, २४-२५
४. विष्णुधपु० ३, १४, ७

अत्राप्यन्यरूपस्य वस्तुनो वास्तविकं स्वरूपमपहायान्यथा कल्पनेवोत्प्रेक्षा। काव्यालङ्कारमतेनानयोपमातिशयोक्तियुक्तया भाव्यम्। प्रस्तुतस्य वस्तुनो गुणक्रियायोगोऽप्यत्र न दृश्यते।[1]

काव्यादर्शोक्तलक्षणं त्वग्निपुराणोक्तलक्षणेन सह संवदति।[2] सरस्वतीकण्ठाभरणमतेनान्यथावस्थितं वस्तु यत्र प्रकारान्तरेणोत्प्रेक्ष्यते सोत्प्रेक्षा। वस्त्विति शब्देन द्रव्यगुणक्रियाणां ग्रहणम्।[3]

मार्कण्डेयपुराणेऽस्यालङ्कारस्य स्वल्पः प्रयोगो दृश्यते किन्तु विष्णुभागवतयोरस्य भूयान् समावेश उपलभ्यते। विष्णुपुराणेऽस्यालङ्कारस्योपविंशतिषु मार्कण्डेयपुराण उपदशसु भागवतपुराणे चोपनवतिषु स्थलेषु प्रयोगः।

विष्णुपुराणे वराहावतारधारिणो भगवतो विष्णोर्वर्णनम्—

**दंष्ट्राग्रविन्यस्तमशेषमेत-**
**द्भूमण्डलं नाथ विभाव्यते ते।**
**विगाहतः पद्मवनं विलग्नं**
**सरोजिनीपत्रमिवोढपङ्कम् ॥**[4]

अत्र वराहरूपधारिणो भगवतो दंष्ट्राग्रविन्यस्तभूमण्डलस्य करिदंष्ट्राग्रे विन्यस्तेन लग्नपङ्केन सरोजिनीपत्रेण सहोत्प्रेक्षा। विभाव्यत इत्युत्प्रेक्षावाची शब्दोऽप्यत्र प्रयुक्तः।

विष्णुपुराणे प्रह्लादः स्वपितरं हिरण्यकशिपुं विष्णोः प्रभावं बोधयन् कथयति—

**तातैष वह्निः पवनेरितोऽपि**
**न मां दहत्यत्र समन्ततोऽहम्।**
**पश्यामि पद्मास्तरणास्तृतानि**
**शीतानि सर्वाणि दिशाम्मुखानि ॥**[5]

---

१. अविवक्षितसामान्या किञ्चिच्चोपमया सह।
अतद्गुणक्रियायोगादुत्प्रेक्षातिशयान्विता ॥ काव्याल० २, ९१

२. अन्यथैव स्थिता वृत्तिश्चेतनस्येतरस्य वा।
अन्यथोत्प्रेक्ष्यते यत्र तामुत्प्रेक्षां विदुर्यथा ॥ काव्याद० २, २२१

३. अन्यथावस्थितं वस्तु यस्यामुत्प्रेक्ष्यतेऽन्यथा।
द्रव्यं गुणः क्रिया चापि तामुत्प्रेक्षां प्रचक्षते ॥ सरस्वतीक० ४, ५०

४. विष्णुपु० १, ४, ३६

५. तत्रैव १, १७, ४७

अत्र दिक्षु प्रसृते पवनेरिते वह्नौ पद्मास्तरणानां कल्पना। वस्तुतस्तु पद्मास्तरणानि नास्तृतानि परं पश्यामीति कथनेनात्र तेषां कल्पना।

मार्कण्डेयपुराणे कुवलयाश्वमदालसाकथाप्रसङ्गः—

**तां दृष्ट्वा चारुसर्वाङ्गीमनङ्गाङ्गलतामिव।**
**सोऽमन्यत्पार्थिवसुतस्तां रसातलदेवताम् ॥**[1]

अत्र मदालसाया वास्तवं रूपं परित्यज्य तस्यां रसातलदेवतायाः कल्पना। अतएवात्रोत्प्रेक्षा।

मार्कण्डेयपुराणस्य हरिश्चन्द्रोपाख्याने श्मशाने हरिश्चन्द्रः स्वीयां पत्नीं शैव्यां नाभिज्ञातुमशक्नोदिति वर्णनम्—

**स तां रोरूयतीं भार्यां नाभ्यजानात्तु पार्थिवः।**
**चिरप्रवाससन्तप्तां पुनर्जातामिवाबलाम् ॥**[2]

अत्र पुनर्जातामिवेति पदेऽपुनर्जातायां पुनर्जातायाः कल्पना। अस्याः खलु वास्तवरूपमपहायान्यरूपेणान्वितत्वादत्रोत्प्रेक्षा।

भागवतपुराणे वराहावतारप्रसङ्गे भयातुरस्य समुद्रस्य वर्णनम्—

**स वज्रकूटाङ्गनिपातवेग-**
**विशीर्णकुक्षिः स्तनयन्नुदन्वान्।**
**उत्सृष्टदीर्घोर्मिभुजैरिवार्त-**
**श्चुक्रोश यज्ञेश्वर पाहि मेति ॥**[3]

अत्रोर्मिभुजैरिति पदे, ऊर्मयोजभुत्वेन कल्पिताः। एवमासां वास्तवस्वरूपमपहायान्यार्थकल्पनं विहितम् (इवेतिशब्दोऽस्याः कल्पनाया मूलम्)। अतएवान्यस्मिन्नन्यथोत्प्रेक्षाभावादत्रोत्प्रेक्षालङ्कारः।

भागवतपुराणे हिरण्याक्षप्रयुक्ताया मायाया वर्णनम्—

**प्रववुर्वायवश्चण्डास्तमः पांसवमैरयन्।**
**दिग्भ्यो निपेतुर्ग्रावाणः क्षेपणैः प्रहिता इव ॥**[4]

---

१. मार्कण्डेयपु० १९, १९

२. तत्रैव ८, १७८

३. भागवतपु० ३, १३, २९

४. तत्रैव ३, १९, १८

वस्तुतो ग्रावाणः क्षेपणैर्न प्रहिताः परमत्रैतादृशी कल्पना विहिता। अतएवात्राप्यन्यस्मिन्नन्यविधकल्पनायोजनादुत्प्रेक्षालङ्कारः।

## ८. अतिशयोक्तिः

अग्निपुराणोक्तलक्षणम्—

**लोकसीमानिवृत्तस्य वस्तुधर्मस्य कीर्तनम्॥**
**भवेदतिशयो नाम···।**[१]

यत्र कस्यचित् वस्तुनोऽलौकिकधर्मवर्णनं तत्रातिशयः (अतिशयोक्तिः) अलङ्कारः।

विष्णुधर्मोत्तरपुराणोक्तलक्षणम्—

**प्रोक्ता चतिशयोक्तिस्तु ह्यतुलैरुपमागुणैः॥**[२]

निरुपमैः (अद्वितीयैः) उपमागुणैरन्वितोक्तिरतिशयोक्तिरिति प्रोच्यते। काव्यालङ्कारे तु चमत्कारविशेषाधानहेतवे प्रयुक्तमलौकिकवर्णनायुतं वच एवातिशयोक्तिरिति प्रतिपादितम्।[३] काव्यादर्शमतेन प्रस्तुतस्य वस्तुनः (अत्युत्कर्षद्योतनाय) अलौकिकवर्णनमेवातिशयोक्तिः।[४] सरस्वतीकण्ठाभरणस्यातिशयोक्तिलक्षणं काव्यादर्शोक्तलक्षणेन सह संवदति।[५] त्रिषु पुराणेष्वस्यालङ्कारस्य प्रयोगो नातिप्राचुर्येण विहितः।

विष्णुपुराणे धावतः केशिनो वेगवर्णनम्—

**स खुरक्षतभूपृष्ठस्सटाक्षेपधुताम्बुदः।**
**द्रुतविक्रान्तचन्द्रार्कमार्गो गोपानुपाद्रवत्॥**[६]

---

१. अग्निपु० ३४४, २५-२६

२. विष्णुधपु० ३, १४, १०

३. निमित्ततो वचो यत्तु लोकातिक्रान्तगोचरम्।
मन्यन्तेऽतिशयोक्तिं तामलङ्कारतया यथा॥ काव्याल० २, ८१

४. विवक्षा या विशेषस्य लोकसीमातिवर्तिनी।
असावतिशयोक्तिः स्यादलङ्कारोत्तमा यथा॥ काव्याद० २, २१४

५. विवक्षया विशेषस्य लोकसीमातिवर्तिनी।
असावतिशयोक्तिः स्यादलङ्कारोत्तमा च सा॥ सरस्वतीक० ४, ८१

६. विष्णुपु० ५, १६, २

अत्र सटाक्षेपेण जलधराणामितस्ततोऽपसारणेन सूर्यचन्द्रमसोश्च नार्गातिक्रमणेनाश्वस्य वेगातिशयसंसूचनादतिशयोक्तिरलङ्कारः।

विष्णुपुराणे मल्लयुद्धायोद्यतस्य बलभद्रस्य वर्णनम्—

**बलभद्रोऽपि चास्फोट्य ववल्ग ललितं तथा।**
**पदे पदे तथा भूमिर्यन्नशीर्णा तदद्भुतम् ॥**[1]

अत्र भूमिर्यन्न शीर्णेतिकथनेन बलभद्रपादप्रहारस्य शक्त्यतिशयद्योतनादतिशयोक्तिः।

मार्कण्डेयपुराणे धर्मो विदेहराजं तस्य पुण्यस्य परिमाणं वेदयन् कथयति—

**अब्बिन्दवो यथाम्भोधौ यथा वा दिवि तारकाः।**
**यथा वा वर्षतो धारा गङ्गायां सिकता यथा ॥**
**असंख्येया महाराजन्नानायोनिषु जन्तवः।**
**तथा तवापि पुण्यस्य संख्या नैवोपपद्यते ॥**[2]

अत्र विदेहराजस्य पुण्यस्य लोकसीमातिशायिताया द्योतनादतिशयोक्तिरलङ्कारः।

भागवतपुराणे गोपिकाः कृष्णस्य रूपं प्रशंसन्त्यस्तं कथयन्ति—

**का स्त्र्यङ्ग ते कलपदायतमूर्च्छितेन**
**सम्मोहितार्यचरितान्न चलेत् त्रिलोक्याम्।**
**त्रैलोक्यसौभगमिदं च निरीक्ष्य रूपं**
**यद् गोद्विजद्रुममृगाः पुलकान्यबिभ्रन् ॥**[3]

अत्रेदं रूपं निरीक्ष्य गोद्विजद्रुममृगाः पुलकान्यबिभ्रन्निति कथनेन कृष्णस्य रूपातिशयप्रतीतिरस्मादत्रातिशयोक्तिः।

## ६. व्यतिरेकः

अग्निपुराणोक्तलक्षणम्—

**यदुच्यतेऽतिरिक्तत्वं व्यतिरेकोपमा तु सा।**[4]

---

१. विष्णुपु० ५, २०, ६४
२. मार्कण्डेयपु० १५, ७२-७३
३. भागवतपु० २, २९, ४०
४. अग्निपु० ३४४, १४

उपमानादुपमेयस्याथवोपमेयादुपमानस्य यत्रातिरिक्तत्वम् (न्यूनत्वमाधिक्यं वा) तत्र व्यतिरेकः।

अस्मिन् पुराणेऽयमलङ्कार उपमाया एवैको भेदः।

विष्णुधर्मोत्तरपुराणोक्तलक्षणम्—

**गुणानां व्यतिरेकेण व्यतिरेकमुदाहृतम् ॥**[1]

(उपमानस्योपमेयस्य वा) गुणानां (उपमेयादुपमानाद्वा) अतिशायित्वेन (न्यूनतयाऽऽधिक्येन वा) व्यतिरेकालङ्कारो जायते। काव्यालङ्कारमतेनोपमानवतोऽर्थस्य (उपमेयस्योपमानान्न्यूनत्वमाधिक्यं वा प्रस्तूय) भेदप्रदर्शनं व्यतिरेकः।[2] काव्यादर्शमतेन द्वयोर्वस्तुनोः (उपमानोपमेययोः) सादृश्ये साधारणधर्मवाचकेवादिशब्दप्रयोगेण बोधिते सति केनचिद्धर्मविशेषेणोपमानोपमेययोः परस्परमुत्कर्षापकर्षरूपभेदकथनं व्यतिरेकः।[3] अत्रेवादिवाचकपदानामपि प्रयोगविधानम्। परमग्निविष्णुधर्मोत्तरपुराणलक्षणयोर्नैतदुक्तम्। सरस्वतीकण्ठाभरणोक्तव्यतिरेकलक्षणं काव्यादर्शोक्तलक्षणेन सह सर्वथा संवदति।[4]

पुराणेष्वस्यालङ्कारस्य कतिपयेष्वेव स्थलेषु प्रयोगः।

विष्णुपुराणे—ओं नमो भगवते वासुदेवायेति द्वादशाक्षरमन्त्रस्य माहात्म्यं निरूपयन् पराशरो मुनिर्मैत्रेयं मुनिमेतत् कथयति—

**गत्वा गत्वा निवर्त्तन्ते चन्द्रसूर्यादयो ग्रहाः।**
**अद्यापि न निवर्त्तन्ते द्वादशाक्षरचिन्तकाः ॥**[5]

अत्र चन्द्रसूर्याद्युपमानेभ्यो द्वादशाक्षरचिन्तकोपमेयानामनिवर्तनरूपोत्कर्षसंसूचनाद्व्यतिरेकालङ्कारः। अनिवृत्त्याऽनया प्रभुभक्तानां मोक्षप्राप्तिर्निवृत्त्या च चन्द्रसूर्यादीनामावागमनबन्धापत्तिः सूच्यते।

---

१. विष्णुधपु० ३, १४, ५

२. उपमानवतोऽर्थस्य यद्विशेषनिदर्शनम्।
व्यतिरेकं तमिच्छन्ति विशेषापादनाद् यथा॥ काव्याल० २, ७५

३. शब्दोपात्ते प्रतीते वा सादृश्ये वस्तुनोर्द्वयोः।
तत्र यद्भेदकथनं व्यतिरेकः स कथ्यते॥ काव्याद० २, १८०

४. शब्दोपात्ते प्रतीते वा सादृश्ये वस्तुनोर्द्वयोः।
भेदाभिधानं भेदश्च व्यतिरेकः स कथ्यते॥ सरस्वतीक० ३, ३३

५. विष्णुपु० १, ६, ४०

विष्णुपुराणे पाताललोकस्य वर्णनम्—

**दिवार्करश्मयो यत्र प्रभां तन्वन्ति नातपम् ।**
**शशिरश्मिर्न शीताय निशि द्योताय केवलम् ॥**[1]

अत्रोपमानभूताभ्यः स्वर्गादिलोकार्कशशिरश्मिभ्य उपमेयभूतपाताललोकार्कशशिरश्मीनामुत्कर्षातिरिक्तत्वप्रदर्शनाद् व्यतिरेकोऽलङ्कारः ।

दक्षस्य दुर्वचांसि स्मरन् भगवान् शङ्करः स्वप्रियां सतीमेवमभिदधाति—

**तथारिभिर्न व्यथते शिलीमुखैः**
**शेतेऽर्दिताङ्गो हृदयेन दूयता ।**
**स्वानां यथा वक्रधियां दुरुक्तिभि-**
**र्दिवानिशं तप्यति मर्मताडितः ॥**[2]

अत्र शत्रुबाणेभ्यः कुटिलमतीनां स्वानां दुरुक्तयस्तीक्ष्णतरेतिप्रतिपादनादुपमानादुपमेयस्यातिरिक्तत्वाद्व्यतिरेकः ।

## १०. समासोक्तिः

अग्निपुराणोक्तलक्षणम्—

**यत्रोक्तं गम्यतेऽन्योऽर्थस्तत्समानविशेषणः ।**
**सा समासोक्तिरुदिता संक्षेपार्थतया बुधैः ॥**[3]

यत्रैकेनार्थेन स्वसदृशविशेषणभावादन्योऽप्यर्थो बोध्यते तत्र समासोक्तिः—अस्यां खलु संक्षेपेणार्थद्वयस्य कथनमुपलभ्यते । विष्णुधर्मोत्तरपुराणे नास्य लक्षणम् । काव्यालङ्कारस्य लक्षणमनेन सह सर्वथा संगच्छते ।[4] काव्यादर्शमतेन किमपि प्रस्तुतमप्रस्तुतं वा वस्त्वभिलक्ष्य वर्णनाभिप्रेतसदृशस्य कस्यचित् प्रस्तुतस्याप्रस्तुतस्य वा वस्तुनः कथनमेव समासोक्तिः । संक्षेपेणार्थद्वयकथनाच्चेयमुक्तिः समोक्तिरिति कथ्यते ।[5] सरस्वतीकण्ठाभरणे यत्रातिप्रसिद्धतयोपमानादेवोपमेयस्य प्रतीति-

---

१. विष्णुपु० २, ५, ८

२. भागवतपु० ४, ३, १९

३. अग्निपु० ३४५, १७

४. यत्रोक्ते गम्यतेऽन्योऽर्थस्तत्समानविशेषणः ।
सा समासोक्तिरुद्दिष्टा संक्षिप्तार्थतया यथा ॥ काव्याल० २, ७९

५. वस्तु किञ्चिदभिप्रेत्य तत्तुल्यस्यान्यवस्तुनः ।
उक्तिः संक्षेपरूपत्वात्सा समासोक्तिरिष्यते ॥ काव्याद० २, २०५

स्तत्र समासोक्तिरलङ्कारः ।[1]

अस्यालङ्कारस्य पुराणेष्वल्पीयान् प्रयोगः ।

भागवतपुराणे कृष्णाधररसास्वादकस्य वेणोः सौभाग्याय स्पृहयन्त्यो गोप्यः परस्परं कथयन्ति—

**गोप्यः किमाचरदयं कुशलं स्म वेणु-**
**र्दामोदराधरसुधामपि गोपिकानाम् ।**
**भुङ्क्ते स्वयं यदवशिष्टरसं ह्रदिन्यो**
**हृष्यत्त्वचोऽश्रु मुमुचुस्तरवो यथार्थाः ॥**[2]

अत्र गोपिकानां दामोदराधरसुधापाय्यन्योऽपि कश्चित्पुरुषविशेषः समानविशेषणत्वात्प्रतीयतेऽस्मादत्र समासोक्तिः ।

अस्मिन्नेव प्रसङ्गे मेघानामिदं वर्णनम्—

**दृष्ट्वातपे व्रजपशून् सह रामगोपैः**
**सञ्चारयन्तमनुवेणुमुदीरयन्तम् ।**
**प्रेमप्रवृद्ध उदितः कुसुमावलीभिः**
**सख्युर्व्यधात् स्ववपुषाम्बुद आतपत्रम् ॥**[3]

अत्राप्यन्यस्य कस्यचित्प्रीतिप्रवणस्यातपत्रधारिणः पुरुषस्याप्यर्थो गम्यते । अतएवात्रापि समासोक्तिः ।

## ११. व्याजस्तुतिः

अग्निपुराणेऽस्यालङ्कारस्य न किमपि लक्षणम् । विष्णुधर्मोत्तरपुराणे चेदं लक्षणमुपलभ्यते ।

**स्तुतिरूपेण या निन्दा निन्दास्तुतिरिहोच्यते ।**
**निन्दास्तुतिस्तथैवोक्ता निन्दारूपेण या स्तुतिः ॥**[4]

---

१. यत्रोपमानादेवैतदुपमेयं प्रतीयते ।
अतिप्रसिद्धेस्तामाहुः समासोक्तिं मनीषिणः ॥ सरस्वतीक० ४, ४६

२. भागवतपु० १०, २१, ९

३. तत्रैव १०, २१, १६

४. विष्णुधपु० ३, १४, १३-१४

यत्रापाततः स्तुतिः पर्यवसाने च निन्दाऽथवाऽऽपाततो निन्दा पर्यवसाने च स्तुतिस्तत्र निन्दास्तुतिरलङ्कारः। काव्यालङ्कारमतेनात्यधिकगुणानारोप्य स्तुतिव्याजेन यत्र काचिद् व्यंग्यात्मिका निन्दा विधीयते तत्र व्याजस्तुतिः।[1] काव्यादर्शे यत्र कश्चिन्निन्दन्निव स्तौति तत्र व्याजस्तुतिर्जायते। अत्र दोषा इवाभासमाना गुणा वर्ण्यन्ते।[2] सरस्वतीकण्ठाभरणमतेन दोषस्य गुणत्वं गुणस्य च दोषत्वं लेश इत्युच्यते। अस्माद्धि लेशाद् व्याजस्तुतिर्न भिन्ना।[3] एवमत्र निन्दापर्यवसाना स्तुतिः स्तुतिपर्यावसाना निन्दा चेत्युभयविधा व्याजस्तुतिर्वर्णिता।

अस्यालङ्कारस्य पुराणेष्वल्पीयान् प्रयोगः।

भागवतपुराणे रहूगणस्य शिविकां वहन् यदा जडभरतः शनैः शनैर्गच्छति तदा रहूगणस्तं कथयति—

अहो कष्टं भ्रातर्व्यक्तमुरु परिश्रान्तो दीर्घमध्वानमेक एव ऊहिवान् सुचिरं नातिपीवा न संहननाङ्गो जरसा चोपद्रुतो भवान् सखे नो एवापर एते संघट्टिन इति···।[4]

अत्र प्रयुक्तैः शब्दैरापाततस्तु जडभरतस्य स्तुतिः प्रतीयते परं पर्यवसानेऽत्र तस्य निन्दा विहितेति ज्ञायते।

## १२. विभावना

अग्निपुराणोक्तलक्षणम्—

**प्रसिद्धहेतुव्यावृत्या यत्किञ्चित् कारणान्तरम्।**
**यत्र स्वाभाविकत्वं वा विभाव्यं सा विभावना॥**[5]

यत्र लोकप्रसिद्धस्य हेतोरभावप्रदर्शनेन किञ्चित्स्वाभाविकं कल्पितं वा

---

१. दूराधिकगुणस्तोत्रव्यपदेशेन तुल्यताम्।
किञ्चिद्विधित्सोर्या निन्दाव्याजस्तुतिरसौ यथा॥ काव्याल० ३, ३१

२. यदि निन्दन्निव स्तौति व्याजस्तुतिरसौ स्मृता।
दोषाभासा गुणा एव लभन्ते ह्यत्र सन्निधिम्॥ काव्याद० २, ३४३

३. दोषस्य यो गुणीभावो दोषीभावो गुणस्य यः।
स लेशः स्यात्ततो नान्या व्याजस्तुतिरपीष्यते॥ सरस्वतीक० ४, ५६

४. भागवतपु० ५, १०, ६

५. अग्निपु० ३४४, २७-२८

कारणान्तरं स्थाप्यते तत्र विभावना।

विष्णुधर्मोत्तरपुराणोक्तलक्षणम्—

**हेतुं विना विततता प्राप्ता सा तु विभावना।**[1]

यत्र हेतोर्विना कार्यं सम्पद्यते तत्र विभावना।

काव्यालङ्कारे क्रियाया अभावेऽपि तत्क्रियासम्बद्धफलकल्पनमेव विभावनोक्ता।[2] काव्यादर्शसरस्वतीकण्ठाभरणोक्तलक्षणे अग्निपुराणवर्णितेन लक्षणेन सह सर्वथा संवदतः।[3]

अस्यालङ्कारस्य त्रिषु पुराणेषु यत्र तत्र प्रयोगः।

विष्णुपुराणे सिंहासनारूढस्य राज्ञः पृथोः प्रभाववर्णनम्—

**अकृष्टपच्या पृथिवी सिद्ध्यन्त्यन्नानि चिन्तया।**
**सर्वकामदुघा गावः पुटके पुटके मधु॥**[4]

अत्र हेतून् विनाऽपि कृषिपाकादिकर्मणां सम्पन्नत्वाद् विभावना।

मार्कण्डेयपुराणे मिथुनसृष्टिप्रकरणे नवीनवृक्षाणामुत्पत्तिवर्णनम्—

**प्रणेशुरपरे चासंश्चतुःशाखा महीरुहाः।**
**वस्त्राणि च प्रसूयन्ते फलेष्वाभरणानि च॥**
**तेष्वेव जायते तेषां गन्धवर्णरसान्वितम्।**
**अमाक्षिकं महावीर्यं पुटके पुटके मधु॥**[5]

अत्र कार्पासकनकमक्षिकाभ्यो विनैव वस्त्राभरणमधूनामुत्पत्तिवर्णनाद्विभावना।

---

१. विष्णुधपु० ३, १४, १०

२. क्रियायाः प्रतिषेधे या तत्फलस्य विभावना।
ज्ञेया विभावनैवासौ समाधौ सुलभे सति॥ काव्याल० २, ७७

३. प्रसिद्धहेतुव्यावृत्त्या यत्किञ्चित् कारणान्तरम्।
यत्र स्वाभाविकत्वं वा विभाव्यं सा विभावना॥ काव्याद० २, १९९

प्रसिद्धहेतुव्यावृत्त्या यत्किञ्चित् कारणान्तरम्।
यत्र स्वाभाविकं वापि विभाव्यं सा विभावना॥ सरस्वतीक० ३, ६

४. विष्णुपु० १, १३, ५०

५. मार्कण्डेयपु० ४६, ३०-३१

भागवतपुराणे हिरण्यकशिपोर्हिरण्याक्षस्य च जन्मनः प्रादुर्भूतस्योत्पातस्य वर्णनम्—

मुहुः परिधयोऽभूवन् सराह्वोः शशिसूर्ययोः ।
निर्घाता रथनिर्ह्रादा विवरेभ्यः प्रजज्ञिरे ॥
गावोऽत्रसन्नसृग्दोहास्तोयदाः पूयवर्षिणः ।
व्यरुदन् देवलिङ्गानि द्रुमाः पेतुर्विनानिलम् ॥[1]

अत्रापि प्रसिद्धहेतुभ्यो विना तत्तत्कार्यसम्भवाद् विभावना ।

## १३. विशेषोक्तिः

अग्निपुराणोक्तलक्षणम्—

गुणजातिक्रियादीनां यत्र वैकल्यदर्शनम् ।
विशेषदर्शनायैव सा विशेषोक्तिरुच्यते ॥[2]

यत्र प्रस्तुतस्य वीर्याद्यतिशयरूपवैशिष्ट्यबोधनाय गुणजातिक्रियाद्रव्याणां निष्फलत्वं प्रदर्श्यते सा विशेषोक्तिः ।

विष्णुधर्मोत्तरपुराणोक्तलक्षणम्—

विशेषप्रापणादुक्ता विशेषोक्तिस्तथा नृप ।[3]

प्रस्तुतस्य वीर्याद्यतिशयात्मकविशेषगुणानामत्र वर्णनादस्य विशेषोक्तिरिति नाम । एतल्लक्षणं नातिस्पष्टम् । काव्यालङ्कारमतेन वीर्याद्यतिशयरूपविशेषगुणानां प्रख्यापनाय यत्र हेतुरूपैकदेशे विद्यमानेऽपि तत्कार्यरूपगुणान्तरस्याधानं विधीयते तत्र विशेषोक्तिः ।[4] काव्यादर्शस्य सरस्वतीकण्ठाभरणस्य च लक्षणे अग्निपुराणोक्तलक्षणेन सह सर्वथा संवदतः ।[5]

---

१. भागवतपु० ३, १७, ८; ३, १७, १३

२. अग्निपु० ३४४, २६-२७

३. विष्णुधपु० ३, १४, १२

४. एकदेशस्य विगमे या गुणान्तरसंस्थितिः ।
विशेषप्रथनायासौ विशेषोक्तिर्मता यथा ॥ काव्याल० ३, २३

५. गुणजातिक्रियादीनां यत्तु वैकल्यदर्शनम् ।
विशेषदर्शनायैव सा विशेषोक्तिरिष्यते ॥ काव्याद० २, ३२३; सरस्वतीक० ४, ७०

अस्यालङ्कारस्य पुराणेष्वल्पीयान् प्रयोगः ।

मार्कण्डेयपुराणे राज्ञः पृथोः प्रभाववर्णनम्—

**रसाः पुष्टिकराश्चासन् पुष्टिर्नोन्मादकारिणी ।**
**न वित्तनिचया नृणां प्रभूता मदहेतवः ॥**[1]

अत्र पुष्ट्यादिगुणानामुन्मादादिकार्याभावेन तद्वैफल्यदर्शनाद् विशेषोक्तिः ।

## १४. आक्षेपः

अग्निपुराणोक्तलक्षणम्—

**शब्देनार्थेन यत्रार्थः कृत्वा स्वयमुपार्जनम् ।**
**प्रतिषेध इवेष्टस्य यो विशेषोऽभिधित्सया ॥**
**तमाक्षेपं ब्रुवन्त्यत्र··· ।**[2]

यत्र ( विध्यात्मकेन निषेधात्मकेन वा ) शब्देनार्थेन वाऽभिप्रायाभिव्यक्तये प्रबलतरं सामर्थ्यं गृहीत्वा कश्चिदर्थविशेषं बोधयितुमभीष्टस्यार्थस्य प्रतिषेध इव विधीयते तत्राक्षेपालङ्कारः । विष्णुधर्मोत्तरपुराणे नास्य किमपि लक्षणम् । काव्यालङ्कारस्य लक्षणमग्निपुराणोक्तलक्षणेन सङ्गच्छते ।[3] काव्यादर्शमतेन प्रतिषेधोक्तिरेवाक्षेपः ।[4] इदं लक्षणं तत्त्वार्थं न सम्यक्तया सूचयति । सरस्वतीकण्ठाभरणेन च विधिना निषेधेन प्रतिषेध आक्षेप इति प्रतिपादितम् ।[5]

अस्यालङ्कारस्य पुराणेष्वल्पीयान् प्रयोगः ।

विष्णुपुराणे गोकुलमागतं बलरामं गोप्यो मथुरास्थितस्य कृष्णस्य विषये जिज्ञासमानाः कथयन्ति—

**कच्चित्स्मरति नः कृष्णो गीतानुगमनं कलम् ।**
**अप्यसौ मातरं द्रष्टुं सकृदप्यागमिष्यति ॥**

---

१. मार्कण्डेयपु० ११६, १७

२. अग्निपु० ३४५, १५-१६

३. प्रतिषेध इवेष्टस्य यो विशेषाभिधित्सया ।
आक्षेप इति तं सन्तः शंसन्ति द्विविधं यथा ॥ काव्याल० २, ६८

४. प्रतिषेधोक्तिराक्षेपस्त्रैकाल्यापेक्षया त्रिधा ॥ काव्याद० २, १२०

५. विधिनाऽथ निषेधेन प्रतिषेधोक्तिरत्र या ॥ सरस्वतीक० ४, ६४

**अथवा किं तदालापैः क्रियतामपराः कथाः ।**
**यस्यास्माभिर्विना तेन विनास्माकं भविष्यति ॥**[1]

अत्राथवा किं तदालापैरित्यादिवाक्ये प्रणयकुपिताभिर्गोपीभिः कृष्ण-विषयिकीं कथां कथयितुं प्रतिषेध इव विधीयते । अयं च प्रतिषेधाभासस्तासां दुःखातिशयं व्यनक्ति । अतएवानेन प्रतिषेधेन दुःखातिशयरूपविशेषार्थद्योतनादत्राक्षेपोऽलङ्कारः ।

## १५. विरोधः

अग्निपुराणोक्तलक्षणम्—

**सङ्गतीकरणं युक्त्या यदसङ्गच्छमानयोः ।**
**विरोधपूर्वकत्वेन तद्विरोध इति स्मृतम् ॥**[2]

यत्र परस्परविरुद्धयोर्द्वयोरर्थयोर्विरोधप्रदर्शनपूर्वकं युक्त्या सङ्गतिर्विधीयते तत्र विरोधालङ्कारः ।

विष्णुधर्मोत्तरपुराणोक्तलक्षणम्—

**या क्रिया चान्यफलदा विरोधस्तु स इष्यते ।**[3]

यत्र काचिद् क्रिया (विरुद्धा प्रतीयमाना सत्यप्यर्थसङ्गतिमवाप्य) अन्यं (सङ्गतार्थरूपम्) फलं ददाति तत्र विरोधः । काव्यालङ्कारमतेन यत्रार्थविशेषं द्योतयितुं गुणस्य क्रियाया वा विरुद्धा अन्याः क्रियाः प्रस्तूयन्ते तत्र विरोधः ।[4] काव्यादर्शस्य लक्षणमग्निपुराणस्य लक्षणेन सह सङ्गच्छते । अत्र शब्दभेदमात्रमर्थस्तु समान एव ।[5] सरस्वतीकण्ठाभरणमतेन पदार्थानामसम्बन्ध एव विरोधः ।[6]

अस्यालङ्कारस्य पुराणेषु नातिप्राचुर्येण प्रयोगः ।

---

१. विष्णुपु० ५, २४, १४-१५

२. अग्निपु० ३४४, २८-२९

३. विष्णुधपु० ३, १४, १३

४. गुणस्य वा क्रियाया वा विरुद्धान्यक्रियाभिधा ।
या विशेषाभिधानाय विरोधं तं विदुर्बुधाः ॥ काव्याल० ३, २५

५. विरुद्धानां पदार्थानां यत्र संसर्गदर्शनम् ।
विशेषदर्शनायैव स विरोधः स्मृतो यथा ॥ काव्याद० २, ३३३

६. विरोधस्तु पदार्थानां परस्परमसङ्गतिः ॥ सरस्वतीक० ३, २४

विष्णुपुराणे ब्रह्मा भगवन्तं विष्णुं स्तौति—

**शृणोष्यकर्णः परिपश्यसि त्व-**
**मचक्षुरेको बहुरूपरूपः ।**
**अपादहस्तो जवनो ग्रहीता**
**त्वं वेत्सि सर्वं न च सर्ववेद्यः ॥**[1]

अत्र कर्णचक्षुषामभावे श्रवणप्रेक्षणक्रिये, एकत्वे सति बहुरूपत्वं करचरणानामभावे गमनग्रहणसामर्थ्यं सर्वज्ञे सत्यसर्ववेद्यत्वं चेमे परस्परं विरुद्धा गुणाः क्रियाश्च वर्तन्ते । भगवति विष्णावेतेषां युक्त्या सङ्गतीकरणादत्र विरोधालङ्कारः ।

भागवतपुराणे कृष्णस्य लीला वर्णयन्नुद्धवो विदुरं कथयति—

**मां खेदयत्येतदजस्य जन्म-**
**विडम्बनं यद्वसुदेवगेहे ।**
**व्रजे च वासोऽरिभयादिव स्वयं**
**पुराद् व्यवात्सीद् यदनन्तवीर्यः ॥**[2]

अत्र भक्तवत्सलतां प्रदर्शयितुमजत्वादिगुणोपेते कृष्णे जन्मादिविरुद्धगुणानां युक्त्या सङ्गतीकरणाद्विरोधालङ्कारः ।

## १६. स्वरूपम्

स्वभावोक्तिरेवाग्निपुराणे स्वरूपालङ्कारत्वेन निर्दिष्टा । अस्येदं लक्षणम्—

**स्वभाव एव भावानां स्वरूपमभिधीयते ।**[3]

पदार्थानां प्रकृतेर्याथातथ्येन यत्र वर्णनं तत्र स्वरूपमलङ्कारः ।

विष्णुधर्मोत्तरपुराणोक्तलक्षणम्—

**यथास्वरूपकथनं स्वभावोक्तिः प्रकीर्तिता ॥**[4]

कस्यचिद्वस्तुनो यथार्थरूपवर्णनमेव स्वभावोक्तिः । काव्यालङ्कारस्य

---

१. विष्णुपु० ५, १, ४०

२. भागवतपु० ३, २, १६

३. अग्निपु० ३४४, ३

४. विष्णुधपु० ३, १४, ११

लक्षणमग्निपुराणविष्णुधर्मोत्तरपुराणोक्तलक्षणाभ्यां सह सङ्गच्छते । तत्रार्थस्य तदवस्थत्वमेव स्वभावः ।[1] काव्यादर्शे स्वभावोक्तेर्जातिरित्यपरं नामापि दृश्यते । अस्यां खलु वस्तुनोऽनेकासामवस्थानां वर्णनं विधीयते ।[2] सरस्वतीकण्ठाभरणेऽस्यालङ्कारस्य जातिरिति नाम । तत्रापि वस्तुनो नानावस्थासु यानि रूपाणि तेषां नैसर्गिकं वर्णनं जातिरिति प्रोक्तम् ।[3]

अस्यालङ्कारस्य पुराणेषु यत्रकुत्रचिदेव प्रयोगः ।

विष्णुपुराणे व्रजमागतस्य वृषभरूपधारिणोऽसुरस्य वर्णनम्—

**लेलिहानस्सनिष्पेषं जिह्वयोष्ठौ पुनः पुनः ।**
**संरम्भाविद्धलाङ्गूलः कठिनस्कन्धबन्धनः ॥**
**उदग्रककुदाभोगप्रमाणो दुरतिक्रमः ।**
**विण्मूत्रलिप्तपृष्ठाङ्गो गवामुद्वेगकारकः ॥**[4]

अत्र वृषभरूपिणो राक्षसस्य वपुषः स्वाभाविकम् (यथावस्थम्) वर्णनम् ।

प्रह्लादो भगवन्तं नृसिंहं स्तुवन् कथयति—

**नाहं बिभेम्यजित तेऽतिभयानकास्य-**
**जिह्वार्कनेत्रभ्रुकुटीरभसोग्रदंष्ट्रात् ।**
**आन्त्रस्रजः क्षतजकेसरशङ्कुकर्णा-**
**न्निर्ह्रादभीतदिगिभादरिभिन्नखाग्रात् ॥**[5]

अत्र भगवतो नृसिंहस्य भयानकस्य देहस्यावस्थानुरूपं वर्णनम्—

## १७. अर्थान्तरन्यासः

अग्निपुराणोक्तलक्षणम्—

**भवेदर्थान्तरन्यासः सादृश्येनोत्तरेण सः ।**[6]

---

१. स्वाभावोक्तिरलङ्कार इति केचित् प्रचक्षते ।
अर्थस्य तदवस्थत्वं स्वभावोऽभिहितो यथा ॥ काव्याल० २, ९३

२. नानावस्थं पदार्थानां रूपं साक्षाद्विवृण्वती ।
स्वभावोक्तिश्च जातिश्चेत्याद्या सालङ्कृतिर्यथा ॥ काव्याद० २, ८

३. नानावस्थासु जायन्ते यानि रूपाणि वस्तुनः ।
स्वेभ्यः स्वेभ्यो निसर्गेभ्यस्तानि जातिं प्रचक्षते ॥ सरस्वतीक० ३, ४

४. विष्णुपु० ५, १४, ३-४

५. भागवतपु० ७, ९, १५

६. अग्निपु० ३४४, २४

यत्र सदृशार्थबोधकेनोत्तरवर्तिना वाक्येन पूर्ववाक्यगतोऽर्थः समर्थ्यते तत्रार्थान्तरन्यासः ।

विष्णुधर्मोत्तरपुराणोक्तलक्षणम्—

**उपन्यासस्तथान्यः स्यात्प्रस्तुताद् यः क्वचिद् भवेत् ।**
**ज्ञेयः सोऽर्थान्तरन्यासः पूर्वार्थानुगतो यदि ॥**[1]

यदि क्वचित्प्रस्तुतादपरस्तदर्थानुसारी (प्रस्तुतस्यार्थस्य समर्थकः) अन्योऽर्थ उपन्यस्यते तदाऽर्थान्तरन्यासोऽलङ्कारः । काव्यालङ्कारमतेनोक्तादर्थादृते तदर्थान्वितस्यान्यस्यार्थस्योपन्यसनमर्थान्तरन्यासः ।[2] काव्यालङ्कारोक्तलक्षणस्य विष्णुधर्मोत्तरपुराणोक्तलक्षणेन सह साम्यम् । काव्यादर्शः किञ्चन वस्तु पुरस्कृत्य तत्समर्थनायान्यस्य वस्तुनो न्यास एवार्थान्तरन्यास इति प्रतिपादयति ।[3] सरस्वतीकण्ठाभरणस्य लक्षणं काव्यादर्शोक्तेन लक्षणेन सह सर्वथा संवदति ।[4]

अस्यालङ्कारस्य त्रिषु पुराणेषु यत्र तत्र प्रयोग उपलभ्यते ।

विष्णुपुराणे भूरिभारसमाक्रान्ता पृथिवी भगवन्तं विष्णुं स्तौति—

**त्वामाराध्य परं ब्रह्म याता मुक्तिं मुमुक्षवः ।**
**वासुदेवमनाराध्य को मोक्षं समवाप्स्यति ॥**[5]

अत्रोत्तरं वाक्यं पूर्ववर्तिवाक्योक्तं वस्त्वेव समर्थयति ।

विष्णुपुराणे विषयासक्तः सौरभिर्मुनिर्विषयसङ्गादेवाखिला दोषाः प्रादुर्भवन्तीति चिन्तयति—

**निःसङ्गता मुक्तिपदं यतीनां**
**सङ्गादशेषाः प्रभवन्ति दोषाः ।**
**आरूढयोगो विनिपात्यतेऽध-**
**स्सङ्गेन योगी किमुताल्पसिद्धिः ॥**[6]

---

१. विष्णुधपु० ३, १४, १२

२. उपन्यसनमन्यस्य यदर्थस्योदितादृते ।
ज्ञेयः सोऽर्थान्तरन्यासः पूर्वार्थानुगतो यदि ॥ काव्याल० २, ७१

३. ज्ञेयः सोऽर्थान्तरन्यासो वस्तु प्रस्तुत्य किञ्चन ।
तत्साधनसमर्थस्य न्यासो योऽन्यस्य वस्तुनः ॥ काव्याद० २, १६९

४. सरस्वतीक० ४, ६७

५. विष्णुपु० १, ४, १८

६. तत्रैव ४, २, १२४

अत्र पूर्वेण वाक्येन निःसङ्गतया मुक्तिपदस्य प्राप्तिरिति प्रतिपादितमुत्तरवर्तिना च सङ्गादशेषा इत्यादिवैधर्म्यगुणोपेतेन वाक्येन पूर्ववर्तिवाक्योक्तवस्त्वेव समर्थितम् । अनन्तरं चारूढयोग इत्यादिश्लोकार्थेनापि प्रथमवाक्यगतं वस्तु समर्थ्यते । अतएवात्रार्थान्तरन्यासः ।

मार्कण्डेयपुराणे कुवलयाश्वकथान्तर्गतपितृपुत्रसंवादे पिता स्वपुत्रमुद्योगस्य महिमानं प्रदर्शयति—

**नाविज्ञातं न चागम्यं नाप्राप्यं दिवि चेह वा ।।**
**उद्यतानां मनुष्याणां यतचित्तेन्द्रियात्मनाम् ।**
**योजनानां सहस्राणि याति गच्छन् पिपीलिकः ।।**[1]

अत्र पूर्वप्रतिपादितस्यार्थस्योत्तरवर्तिना योजनानामित्यादिवाक्येन समर्थनादर्थान्तरन्यासः ।

भागवतपुराणे वृत्रवधादुत्पन्नाया ब्रह्महत्यायाः पापेन भृशं पीडितस्येन्द्रस्य वर्णनम्—

**तयेन्द्रः स्मासहत् तापं निर्वृतिर्नामुमाविशत् ।**
**ह्रीमन्तं वाच्यतां प्राप्तं सुखयन्त्यपि नो गुणाः ।।**[2]

अत्रोत्तरवाक्यगतयोक्त्या पूर्ववाक्यगताया उक्तेः समर्थनादर्थान्तरन्यासः ।

## १८. निदर्शना

अस्य नाग्निपुराणे किमपि लक्षणम् ।

विष्णुधर्मोत्तरपुराणोक्तलक्षणम्—

**वस्तुना रूप्यमाणेन दर्शनं तन्निदर्शनम् ।।**[3]

यत्र (प्रस्तुताप्रस्तुतयोरेकतया विधायकेन) प्रस्तुतेन केनाप्यर्थेनान्यः सदृशार्थः प्रदर्श्यते तत्र निदर्शना । काव्यालङ्कारमतेन कयाचित् क्रियया

---

१. मार्कण्डेयपु० १८, ३७-३८

२. भागवतपु० ६, १३, ११

३. विष्णुधपु० ३, १४ १४

तत्सम्बद्धस्यान्यस्यार्थविशेषस्य यत्र दर्शनं तत्र निदर्शना ।[1] केनचिदन्येनार्थेन तदर्थसदृशमेव किमप्यन्यत्साध्वसाधु वा फलं यत्र प्रदर्श्यते तत्र निदर्शनेति काव्यादर्शमतम् ।[2]

सरस्वतीकण्ठाभरणमतेन प्रस्तुतस्य सिद्ध्यर्थं सिद्ध एवार्थे कञ्चिद्विशेषमावेदयितुं दृष्टान्तोक्तिरेव निदर्शनम् ।[3]

अस्यालङ्कारस्य त्रिषु पुराणेषु क्वचित्क्वचिद् वर्णनमुपलभ्यते ।

विष्णुपुराणे यमः पाशहस्तं स्वदूतं भगवतो विष्णोर्भक्तेर्माहात्म्यं वेदयन् कथयति—

**स्फटिकगिरिशिलामलः क्व विष्णु-**
**र्मनसि नृणां क्व च मत्सरादिदोषः ।**
**न हि तुहिनमयूखरश्मिपुञ्जे**
**भवति हुताशनदीप्तिजः प्रतापः ॥**[4]

विमलस्वरूपे भगवति कृष्णे स्वहृदये विराजमाने सति तत्र मत्सरादीनां दोषाणां वासस्तथैव न सम्भवेद् यथा खलु चन्द्रमस्यग्नेरौष्ण्यमिति प्रस्तुतसन्निभस्यान्यस्यार्थस्य दर्शनादत्र निदर्शना ।

मार्कण्डेयपुराणे स्त्रीमूर्त्तिधारिणीनां विद्यानां करुणक्रन्दनं श्रुत्वा राज्ञो हरिश्चन्द्रस्येयमुक्तिः—

**कोऽयं बध्नाति वस्त्रान्ते पावकं पापकृन्नरः ।**
**बलोष्णतेजसा दीप्ते मयि पत्न्यावुपस्थिते ॥**[5]

अत्र मम पश्यतः स्त्रीणामनादरस्तथैवासम्भवो यथा वस्त्रखण्डेनाग्निबन्धनमिति प्रस्तुतसदृशस्यान्यस्यार्थस्य प्रतीयमानत्वान् निदर्शना ।

भागवतपुराणे प्रह्लादो भगवन्तं नृसिंहं स्तुवन् विषयभोगान् निन्दयन् कथयति—

**कुत्राशिषः श्रुतिसुखा मृगतृष्णिरूपाः**
**क्वेदं कलेवरमशेषरुजां विरोहः ।**

---

१. क्रिययैव विशिष्टस्य तदर्थस्योपदर्शनात् ।
ज्ञेया निदर्शना नाम यथेववतिभिर्विना ॥ काव्याल० ३, ३३

२. अर्थान्तरप्रवृत्तेन किञ्चित्तत्सदृशं फलम् ।
सदसद्वा निदर्श्येत यदि तत्स्यान्निदर्शनम् ॥ काव्याद० ३, ३१

३. दृष्टान्तः प्रोक्तसिद्ध्यै यः सिद्धेऽर्थे तन्निदर्शनम् ॥ सरस्वतीक० ३, ३१

४. विष्णुपु० ३, ७, २३

५. मार्कण्डेयपु० ७, १२

**निर्विद्यते न तु जनो यदपीति विद्वान्**
**कामानलं मधुलवैः शमयन् दुरापैः ॥**[1]

अत्र रुजाक्रान्तेनानेन शरीरेण विषयाणामुपभोगस्तथैव न सम्भवति यथा खलु मधुबिन्दुभिः कामानलः शमयितुं न शक्यत इति प्रस्तुतसदृशस्यान्यार्थस्य प्रतीयमानत्वान्निदर्शनालङ्कारः ।

## १६. दृष्टान्तः

अस्यालङ्कारस्य त्रिषु पुराणेषु यत्र तत्र प्रयोगः परमग्निविष्णुधर्मोत्तर-पुराणयोर्नास्य लक्षणम् । काव्यालङ्कारेऽस्येदं लक्षणम्—

**यत्र दृष्टान्तमात्रेण व्यज्येते साध्यसाधने ।**
**तमाहुः शुद्धदृष्टान्तं तन्मात्राविष्कृतेर्यथा ॥**[2]

यत्रोपमानोपमेययोः साम्यमभिधया नोच्यतेऽपितु तद् व्यञ्जनया गम्यते तत्र दृष्टान्तोऽलङ्कारः । साहित्यदर्पणेऽस्य स्वरूपं सुतरां विशदीकृतम् । तत्रास्येदं लक्षणम्—

**दृष्टान्तस्तु सधर्मस्य वस्तुनः प्रतिबिम्बनम् ।**[3]

वाक्यद्वये धर्मोपेतयोरुपमानोपमेययोः प्रतिविम्बनमेव दृष्टान्तः । प्रति-विम्बनमिति शब्दस्य चायमभिप्रायः — जगति जना दर्पणादौ स्वकीयं प्रतिबिम्बं दृष्ट्वा स्वमुखात्सत्यपि भिन्ने प्रतिबिम्बे, अत्र खलु मम मुखं दर्पणे प्रतिभातीति मन्यन्तेऽन्यथा प्रतिबिम्बं विलोक्य सुन्दरोऽहमिदानीमसुन्दरोऽहं वाऽधुनेति बुद्धिर्न भवेत् । अत्र दिङ्मात्रमेष अलङ्कार उदाह्रियते ।

विष्णुपुराणे यमः स्वानुचरं भगवद्भक्तेर्माहात्म्यं ख्यापयति—

**हृदि यदि भगवाननादिरास्ते**
**हरिरसिशङ्खगदाधरोऽव्ययात्मा ।**
**तदघमघविघातकर्तृभिन्नं**
**भवति कथं सति चान्धकारमर्के ॥**[4]

---

१. भागवतपु० ७, ६, २५

२. काव्याल० ५, ५८

३. साहित्यद० १०, ५१

४. विष्णुपु० ३, ४, २७

यद्यप्यत्रेवादयः शब्दा न प्रयुक्तास्तथापि भगवता सहार्कस्याधेन च सार्वमन्धकारस्य सादृश्यप्रतीतिः । भगवानत्रोपमेयमर्कश्चोपमानं भिन्नत्वं च सामान्यधर्मः । अत्र बिम्बप्रतिबिम्बभावाद् दृष्टान्तः ।

## २०. प्रतिवस्तूपमा

अस्य लक्षणमग्निविष्णुधर्मोत्तरपुराणयोर्नोपलभ्यते । काव्यादर्शेऽस्येदं लक्षणम्—

**वस्तु किञ्चिदुपन्यस्य न्यसनात्तत्सधर्मणः ।**
**साम्यप्रतीतिरस्तीति प्रतिवस्तूपमा यथा ॥**[1]

किमपि प्रकृतं वस्तु प्रथमं प्रतिपाद्य तत्समानधर्मस्याप्रस्तुतस्य न्यसनाद् यत्र व्यञ्जनया सादृश्यावबोधस्तत्र प्रतिवस्तूपमा । परं विश्वनाथेन यत्र द्वयोर्वाक्ययोः सादृश्यं व्यंग्यं तयोः सामान्यधर्मश्च पृथक्शब्दैः ( पुनरुक्तिदोषनिवारणाय ) पृथगुच्येत तत्र प्रतिवस्तूपमेति मतम् । यथाहि साहित्यदर्पणे—

**प्रतिवस्तूपमा सा स्याद् वाक्ययोर्गम्यसाम्ययोः ।**
**एकोऽपि धर्मः सामान्यो यत्र निर्दिश्यते पृथक् ॥**[2]

भागवतपुराणे हिरण्याक्षे मृते सति बालरूपो यमो महिषीरुपदिशति—

**यथानलो दारुषु भिन्न ईयते**
**यथानिलो देहगतः पृथक् स्थितः ।**
**यथा नभः सर्वगतं न सज्जते**
**तथा पुमान् सर्वगुणाश्रयः परः ॥**[3]

अत्र चतुर्ष्वेव वाक्येषु पृथक्स्वरूपः समानो धर्मो विभिन्नैः पदैर्व्यज्यते । अस्मादत्र प्रतिवस्तूपमा ।

अत्रोपर्युक्ता एवालङ्काराः सविशेषं विचारिताः ।

यद्यपि समाधिपर्यायोक्तयथासंख्यानामलङ्काराणामुदाहरणान्येषु त्रिषु पुराणेषु नोपलभ्यन्ते परमेषां लक्षणान्यग्निपुराणे विष्णुधर्मोत्तरपुराणे वा लक्षितानि ।

---

१. काव्याद० २, ४६

२. साहित्यद० १०, ५०

३. भागवतपु० ७, २, ४३

इमानि खलु काव्यालङ्कारकाव्यादर्शोक्तिलक्षणैः सार्धं सर्वथा संवदन्ति ।

## २१. समाधिः

अग्निपुराणोक्तलक्षणम्—

**अन्यधर्मस्ततोऽन्यत्र लोकसीमातिरोधिना ।**
**सम्यगाधीयते यत्र स समाधिरिह स्मृतः ॥**[1]

लोकप्रसिद्धिमनुरुन्धता कविना यत्राप्रस्तुतस्य धर्मः प्रस्तुते सम्यक्तयाऽऽधीयते तत्र समाधिरलङ्कारः । एतदेव लक्षणं काव्यादर्शे प्रोक्तम् ।[2]

## २२. यथासंख्यम्

अस्याग्निपुराणे न किमपि लक्षणम् ।
विष्णुधर्मोत्तरपुराणे चेदं लक्षणम्—

**भूयसामुपदिष्टानां निर्देशः क्रमशस्तथा ॥**
**यथासंख्यमिति प्रोक्तमलङ्कारः पुरातनैः ।**[3]

अनेकेषामुद्दिष्टानां वस्तूनां यदि तेनैव क्रमेण पुनरपि निर्देशः क्रियते तदा यथासंख्यमलङ्कारः । काव्यालङ्कारस्य लक्षणमप्येतादृशमेव ।[4]

## २३. पर्यायोक्तम्

अस्यालङ्कारस्याग्निपुराणे लक्षणमिदम्—

**पर्यायोक्तं यदन्येन प्रकारेणाभिधीयते ।**[5]

यदि व्यंग्यमभिधातिरिक्तेनान्येन प्रकारेण बोध्यते तर्हि पर्यायोक्तमलङ्कारः । अस्येदमेव लक्षणं काव्यालङ्कारे दृश्यते ।[6]

---

१. अग्निपु० ३४५, १३

२. काव्याद० १, ९३

३. विष्णुधपु० ३, १४, ११-१२

४. भूयसामुपदिष्टानामर्थानामसधर्मणाम् ।
क्रमशो यो नु निर्देशो यथासङ्ख्यं तदुच्यते ॥ काव्याल० २, ८९

५. अग्निपु० ३४५, १८

६. काव्याल० ३, ८

# समीक्षणम्

उपरिवर्णितानां त्रिविधानामलङ्काराणामग्निपुराणे लक्षणान्येवोपलभ्यन्ते न तु तेषां निदर्शनानि। अस्मादत्रनिरूपितानामलङ्काराणां स्वरूपं सम्यगवगन्तुं काव्यालङ्कारकाव्यादर्शसरस्वतीकण्ठाभरणसदृशानामितरेषां ग्रन्थानामध्ययनमप्य-पेक्ष्यते। एतेषु हि ग्रन्थेष्वलङ्काराणां लक्षणान्युदाहरणानि चैतदुभयमेव दृश्यते। अयं खल्वनुप्रासाद्यलङ्कारनिदर्शनाभावोऽग्निपुराणस्थालङ्कारभागस्योपादे-यत्वेऽनल्पमपकर्षमावहति।

अग्निपुराणात्पूर्ववर्तिषु काव्यालङ्कारकाव्यादर्शादिषूत्तरवर्तिषु च काव्य-प्रकाशसाहित्यदर्पणादिषु ग्रन्थेष्वनुप्रासस्य कृते वर्णानां पदानां वाऽऽवृत्तिरेवोपादा-नत्वेन मता।[1] अग्निपुराणेऽप्यनुप्रासलक्षणमेतादृगेव।[2] एवमेतेषां काव्यादर्शादि-ग्रन्थकाराणां मतेन पादेषु पदेषु वा वर्णानां सकृदावृत्तिरसकृदावृत्तिर्वा यत्र दृश्यते तत्रैवानुप्रासः काममेवंविधास्वावृत्तिषु कोमलाः कठोरा वा वर्णाः स्युः। अन्त्यानुप्रासादिषु कोमलाः कठोराश्चोभयविधा एव वर्णा आवर्तन्ते[3] नात्रोभय-प्रकाराणां वर्णानां प्रयोगविषये किमपि बन्धनम्। परमग्निपुराणेऽस्या आवृत्तेः स्वरूपमन्यविधमेव। अत्रास्या आवृत्तेः पञ्चेमा वृत्तयो मताः — १. मधुरा २. ललिता ३. प्रौढा ४. भद्रा ५. परुषा च।[4] यस्यामावृत्तौ कोमलानां वर्णा-नामावृत्तिः सा मधुरावृत्तिरिति व्यपदिश्यते।[5] एवमेवापरासां ललितादिवृत्तीनां

---

१. (कः) सरूपवर्णविन्यासमनुप्रासं प्रचक्षते। काव्याल० २, ५

(खः) वर्णावृत्तिरनुप्रासः पादेषु च पदेषु च। काव्याद० १, ५५

(गः) वर्णसाम्यमनुप्रासः········। काव्यप्र० ९, ७९

(घः) अनुप्रासः शब्दसाम्यं वैषम्येऽपि स्वरस्य यत्। साहित्यद० १०, ३

२. स्यादावृत्तिरनुप्रासो वर्णानां पदवाक्ययोः। अग्निपु० ३४३, १

३. व्यञ्जनं चेद् यथावस्थं सहाद्यन स्वरेण तु।
आवर्त्यतेऽन्त्ययोज्यत्वादन्त्यानुप्रास एव तत्॥

······पादान्तगो यथा मम—

केशः काशः स्तबकविकासः, कायः प्रकटितकरभविलासः।
चक्षुर्दग्धवराटककल्पं, त्यजति न चेतः काममनल्पम्॥ साहित्यद० १, १०, ६, वृत्तिभागश्च

४. अग्निपु० ३४३, २

५. तत्रैव ३४३, ३-४

प्रयोगभेदेन ललितादयो वृत्तयो जायन्ते ।[1] एतासां हि वृत्तीनां लक्षणान्यत्र सम्यङ् निरूपितानि, सत्यपि निदर्शनाभावे सर्वासां स्वरूपं सुविशदं ज्ञायते ।

अस्मिन् पुराणे शब्दालङ्कारेभ्योऽर्थालङ्काराणामर्थालङ्कारेभ्यश्च शब्दार्थालङ्काराणां भूयो महत्त्वं निगदितम् । अर्थालङ्कारं विना शब्दालङ्कारस्यापि सौन्दर्यमपार्थम्, एतं विना काव्यरचनाऽपि निःश्रीका सञ्जायते ।[2] शब्दार्थालङ्कारश्च शब्दमर्थं च युगपदेवालङ्करोति ।[3] उभयोरेव शोभाधायकत्वमस्य वैशिष्ट्यम् ।

रसरीत्यलङ्कारेषु को नाम काव्यस्यात्मेति विषये पुराणेऽस्मिन् नैकविधं वर्णनमुपलभ्यते । काव्यं स्फुरदलङ्कारं गुणवद्दोषवर्जितमिति[4] काव्यलक्षणे तु रसस्य नामग्रहणमपि नावलोक्यते । अत्र काव्ये गुणालङ्काराणामनिवार्यत्वेनावस्थानं प्रोक्तम् । परं महाकाव्यवैशिष्ट्यवर्णनप्रसङ्गतो महाकाव्ये रसरीतिगुणादीनां सर्वेषामेवावस्थितिः प्रतिपादिता ।[5] तत्र हीमे सर्व एव महाकाव्यस्योपादानत्वेन मता न चैतेषां प्राधान्यं गौणत्वं वा पृथङ् निरूपितम् । परं पुराणस्यास्य प्रवृत्ती रससम्प्रदायोन्मुखीव प्रतिभाति यतो हि तत्र महाकाव्ये वाग्वैदग्ध्यस्य प्राधान्यं प्रोच्य रसस्य भूयसी प्रधानता प्रतिपादिता ।[6] अपि चान्यत्र नीरसा काव्यरचना (गुणालङ्कारैरलङ्कृता सत्यपि) न शोभत इत्यपि प्रतिपादितम् ।[7] वस्तुत एतत्सर्वं काव्ये महाकाव्ये वा रसरीत्यलङ्काराणां त्रयाणामेव प्राधान्यमभिसूचयति । एतेन ह्यग्निपुराणकारस्य समन्वयवादिनी प्रवृत्तिर्लक्ष्यते केनचित्सम्प्रदायविशेषेण सह न

---

१. अग्निपु० ३४३, ५-११

२. अलङ्करणमर्थानामर्थालङ्कार इष्यते ।
तं विना शब्दसौन्दर्यमपि नास्ति मनोहरम् ॥
अर्थालङ्काररहिता विधवेव सरस्वती ॥ तत्रैव ३४४, १-२

३. शब्दार्थयोरलङ्कारो द्वावलङ्कुरुते समम् ।
एकत्र निहितो हारः स्तनं ग्रीवामिव स्त्रियाः ॥ तत्रैव ३४४, १-२

४. अग्निपु० ३३७, ७

५. तमसा मरुताऽप्यन्यैर्विभावैरतिनिर्भरैः ।
सर्ववृत्तिप्रवृत्तं च सर्वभावप्रभावितम् ॥
सर्वरीतिरसैः स्पृष्टं पुष्टं गुणविभूषणैः ।
अत एव महाकाव्यं तत्कर्त्ता च महाकविः ॥ अग्निपु० ३३७, ३१-३२

६. वाग्वैदग्ध्यप्रधानेऽपि रस एवात्र जीवितम् ।
पृथक्प्रयत्नं निर्वर्त्यं वाग्वक्रिम्णि रसाद् वपुः ॥ तत्रैव ३३७, ३३

७. लक्ष्मीरिव विना त्यागान्न वाणी भाति नीरसा । तत्रैव ३३९, ९

तस्यानुराग इत्यप्यवभासते।

विष्णुपुराणे क्वचित्क्वचिदलङ्कारदोषा अपि दृश्यन्ते । दिङ्मात्रमत्रोदाह्रियते—

**एते लूनशिखास्तस्य दशनैरचिरोद्गतैः ।**
**कुशाः काशा विराजन्ते वटवः सामगा इव ।।**[1]

अत्र सामगा इति विशेषणपदमधिकं प्रयुक्तम् । अस्मादत्रोपमालङ्कारेऽधिकपदत्वाख्यस्य दोषस्य प्रसक्तिर्जायते । यथा लूनशिखा इति पदमुपमानोपमेयभूतानां वटुकुशकाशानां लूनशिखत्वरूपं सामान्यं धर्मं बोधयति न तथा सामगा इति पदं तेषां सामगत्वरूपं किमप्यन्यत् सामान्यधर्ममभिव्यनक्ति ।

अपि च—

**तज्जन्मदिनमत्यर्थमाह्लाद्यमलदिङ्मुखम् ।**
**बभूव सर्वलोकस्य कौमुदी शशिनो यथा ।।**[2]

अत्र दिनमित्युपमेयं नपुंसि विद्यते परं तस्य कौमुदीत्युपमानं स्त्रियां प्रयुक्तम् । उपमानोपमेययोर्मध्ये दृश्यमानेनानेन लिङ्गभेदेनात्र भग्नप्रक्रमताख्यो दोषो जायते ।

परमेतादृशानां दोषाणां नात्र प्राचुर्यम् । बहुषु स्थलेषु शब्दार्थालङ्कारा निपुणं निरूपिताः । इन्द्रकृतलक्ष्मीस्तुतिप्रसङ्गेऽनुप्रासस्य हृद्यानि निदर्शनानि ।[3] त्रिविधतापवर्णने ब्रह्मयोगनिर्णये च रूपकालङ्कारः सम्यक् प्रयुक्तः ।[4] नैमित्तिक-

---

१. विष्णुपु० २, १३, २७

२. विष्णुपु० ५, ३, ३

३. पद्मालयां पद्मकरां पद्मपत्रनिभेक्षणाम् ।
वन्दे पद्ममुखीं देवीं पद्मनाभप्रियामहम् ।। तत्रैव १, ९, ११८

४. (कः) इति संसारदुःखार्कतापतापितचेतसाम् ।
विमुक्तिपादपच्छायामृते कुत्र सुखं नृणाम् ।। विष्णुपु० ६, ५, ५७

(खः) प्रक्षाल्यते यदा सोऽस्य रेणुर्ज्ञानोष्णवारिणा ।
तदा संसारपान्थस्य याति मोहश्रमशमम् ।। तत्रैव ६, ७, २०

प्रलयवर्णने संवर्तकमेघानां स्वरूपमुपमालङ्कारसाहाय्येन सुविशदीकृतम्। शरद्वर्णने श्लेषस्योपमाया उत्प्रेक्षायाश्च प्रशस्यानि हृदयावर्जकानि चोदाहरणान्युपलभ्यन्ते।[1] एतद् वर्णनं काव्यसौन्दर्यदृष्ट्या महनीयं स्थानं लब्धुमर्हति। एवमस्मिन् पुराणे यत्र तत्र विद्यमाना अन्येऽप्यलङ्काराः काव्यात्मभूतस्य रसस्योपकारकत्वादुत्कर्षमावहन्ति।

मार्कण्डेयपुराणे क्वचित्क्वचिदुपमायामनुचितार्थत्वदोष आपतति। यथाहि—

**कदम्बपुष्पवद् भास्वानधश्चोर्ध्वं च रश्मिभिः।**
**वृत्ताग्निपिण्डसदृशो दध्रे नातिस्फुरद् वपुः॥**[2]

अत्रोपमानभूतस्य कदम्बपुष्पस्य परिमाणन्यूनत्वादुपमायामनुचितार्थता। अपि च—

**उवाच द्वाःस्थमाहूय निःश्वसन्नुरगो यथा।**
**निराकृतस्तया देव्या प्रियया पतिरप्रियः॥**[3]

अत्राप्युपमेयभूतस्योत्तमनृपस्योपमानभूत उरगे जातिगतन्यूनत्वादनुचितार्थता।

अस्मिन् पुराणेऽलङ्काराणां प्राचुर्येण प्रयोगो न दृश्यते। दत्तात्रेयालर्कसंवादे, मार्कण्डेयजैमिनिसंलापे पितृपुत्रसंवादे च रूपकालङ्कारस्य मनोहारिवर्णनम्।[4]

---

१. (कः) उत्सृज्य जलसर्वस्वं विमलास्सितमूर्तयः।
तत्यजुश्चाम्बरं मेघा गृहं विज्ञानिनो यथा॥
शरत्सूर्यांशुतप्तानि ययुश्शोषं सरांसि च।
बह्वालम्बममत्वेन हृदयानीव देहिनाम्॥ विष्णुपु० ५, १०, ४-५

(खः) प्राणायाम इवाम्भोभिस्सरसां कृतपूरकैः।
अभ्यस्यतेऽनुदिवसं रेचकाकुम्भकादिभिः॥ तत्रैव ५, १०, १५

२. मार्कण्डेयपु० १०२, २७

३. तत्रैव ६६, १७

४. (कः) अहमित्यङ्कुरोत्पन्नो ममेति स्कन्धवान् महान्।
गृहक्षेत्रोच्चशाखश्च पुत्रदारादिपल्लवः॥ मार्कण्डेयपु० ३५, ८

(खः) व्यासवाक्यजलौघेन कुतर्कतरुहारिणा।
वेदशैलावतीर्णेन नीरजस्का महीकृता॥ तत्रैव १, १०

(गः) ब्रह्मज्ञानाम्बुशीतेन सिञ्च मां वाक्यवारिणा।
अविद्याकृच्छ्रसर्पेण दष्टं तद्विषपीडितम्॥ तत्रैव १६, १०

मदालसापरिणयप्रसङ्गेऽत्रोपमाया हृद्यानि निदर्शनानि ।[1] परमृते रूपकालङ्कारादस्य पुराणस्यान्येष्वलङ्कारेषु नूतनत्वं सौन्दर्यातिशयो वा न द्रष्टुं शक्यते ।

भागवतपुराणेऽपि यत्रकुत्रचिदुपमादोषा उपलभ्यन्ते । एतदत्र दिङ्मात्रं प्रदर्श्यते—

त्वं तु कल्पः कविर्दक्षः सुभगोऽमृतभाषणः ।
न कर्त्ता नेहसे किञ्चिज्जडोन्मत्तपिशाचवत् ॥[2]

अत्रोपमेयस्य मुनिदत्तात्रेयस्योपमानीभूतानां जडोन्मत्तपिशाचानां जातिगतन्यूनत्वादनुचितार्थत्वदोषप्रसक्तिः ।

अपि च—

स्वपत्न्याऽवभृथस्नातो ज्ञातिबन्धुसुहृद्वृतः ।
रेजे स्वज्योत्स्नयेवेन्दुः सुवासाः सुष्ठ्वलङ्कृतः ॥[3]

अत्रोपमानस्य चन्द्रस्य सनक्षत्रत्ववाचकपदस्याभावान्न्यूनपदत्वमिति दोषः समापतति ।

अस्य पुराणस्य कुन्तीकृतकृष्णस्तवेऽनुप्रासालङ्कारस्य शोभनं वर्णनम् ।[4] कृष्णलीलावर्णने भगवतः कृष्णस्य परमधामगमनप्रसङ्गे चोपमायाः प्रशस्यः

---

१. विस्पष्टेन्दुमुखीं सुभ्रूं पीनश्रोणीपयोधराम् ।
बिम्बाधरौष्ठीं तन्वङ्गीं नीलोत्पलविलोचनाम् ॥ तत्रैव १९, १७
ततोऽपश्यत्सुविस्तीर्णे पर्यङ्के सर्वकाञ्चने ।
निषण्णां कन्यकामेकां कामयुक्तां रतिं यथा ॥ मार्कण्डेयपु० १९, १६

२. भागवतपु० ११, ७, २८

३. तत्रैव १०, ७९, ३२

४. कृष्णाय वासुदेवाय देवकीनन्दनाय च ।
नन्दगोपकुमाराय गोविन्दाय नमो नमः ॥
नमः पङ्कजनाभाय नमः पङ्कजमालिने ।
नमः पङ्कजनेत्राय नमस्ते पङ्कजाङ्घ्रये ॥ तत्रैव १, ८, २१-२२

प्रयोगः ।[१] ब्रह्मकृतनारायणस्तवे रूपकालङ्कारः[२] कालियनागकथायामुत्प्रेक्षालङ्कारो-[३] ऽवधूतोपाख्याने श्लेषोपमालङ्काराश्च सुतरां निरूपिताः ।[४] दशमस्कन्धस्य विंशेऽध्याये शरदो वर्षायाश्चर्त्वोः श्लाघनीयं वर्णनम् । अत्र प्रयुक्ता अलङ्काराः काव्यसौन्दर्यदृष्ट्योत्कृष्टतमं स्थानमवाप्तुमर्हन्ति । अत्र रूपकस्योपमायाश्च बहुशः श्लाघनीयाः प्रयोगाः ।[५] समासोक्त्यलङ्कारोऽप्यस्मिन् पुराणे दृग्गोचरीभवति ।[६]

---

१. (कः) कृष्णस्य विष्वक् पुरुराजमण्डले
रम्याननाः फुल्लदृशो व्रजार्भकाः ।
सहोपविष्टा विपिने विरेजु-
श्छदा यथाम्भोरुहकर्णिकायाः ॥ भागवतपु० १०, १३, ८

(खः) बिभ्रच्चतुर्भुजं रूपं भ्राजिष्णु प्रभया स्वया ।
दिशो वितिमिराः कुर्वन् विधूम इव पावकः ॥ तत्रैव ११, ३०, २८

२. ये तु त्वदीयचरणाम्बुजकोशगन्धं
जिघ्रन्ति कर्णविवरैः श्रुतिवातनीतम् ।
भक्त्या गृहीतचरणः परया च तेषां
नापैषि नाथ हृदयाम्बुरुहात् स्वपुंसाम् ॥ तत्रैव ३, ९, ५

३. तस्याक्षिभिर्गरलमुद्वमतः शिरस्सु
यद् यत्समुन्नमति निःश्वसतो रुषोच्चैः ।
नृत्यन् पदानुनमयन् दमयाम्बभूव
पुष्पैः प्रपूजित इवेह पुमान् पुराणः ॥ तत्रैव १०, १६, २६

४. मुनिः प्रसन्नगम्भीरो दुर्विगाह्यो दुरत्ययः ।
अनन्तपारो ह्यक्षोभ्यः स्तिमितोद इवार्णवः ॥
अणुभ्यश्च महद्भ्यश्च शास्त्रेभ्यः कुशलो नरः ।
सर्वतः सारमादद्यात् पुष्पेभ्य इव षट्पदः ॥ तत्रैव ११, ८, ५; ११, ८, १०

५. (कः) अष्टौ मासान् निपीतं यद् भूम्याश्चोदमयं वसु ।
स्वगोभिर्मोक्तुमारेभे पर्जन्यः काल आगते ॥ तत्रैव १०, २०, ५

(खः) गिरयो वर्षधाराभिर्हन्यमाना न विव्यथुः ।
अभिभूयमाना व्यसनैर्यथाधोक्षजचेतसः ॥ तत्रैव १०, २०, १५

(गः) अखण्डमण्डलो व्योम्नि रराजोडुगणैः शशी ।
यथा यदुपतिः कृष्णो वृष्णिचक्रावृतो भुवि ॥ तत्रैव १०, २०, ४४

६. शुष्यद्ध्रदाः कर्शिता बत सिन्धुपत्न्यः
सम्प्रत्यपास्तकमलश्रिय इष्टभर्तुः ।

उपरिवर्णिता इमेऽलङ्कारा अस्मिन् पुराणेऽतिप्राचुर्येण यत्र तत्र प्रयुक्ताः। अन्ये प्रधानतमा अलङ्कारा अपि नोपेक्षितास्तेऽपि क्वचित्क्वचिद् दृष्टिपथं समायान्ति। यद्यप्युत्तमकाव्येऽलङ्काराणां रसस्येवावश्यकी स्थितिर्न मता परमेतेऽपि स्वल्पमनल्पं वा तत्रापेक्ष्यन्ते।[1] एतेषां सद्भावेन ध्रुवमेव काव्यस्य शोभा वर्धते।[2] एतत्पुराणस्था अलङ्काराश्चमत्कारातिशयान्विताः। अस्मादिमे काव्यात्मभूतं रसमुपकुर्वन्ति। एतैरुपकृतश्च रसः काव्यरसिकान् भगवद्भक्तांश्च स्वहृदयेषु काव्यानन्दं ब्रह्मानन्दं चैतदुभयमेवास्वादयति।

---

यद्वद् वयं मधुपतेः प्रणयावलोक-
मप्राप्य मुष्टहृदयाः पुरुकर्शिताः स्म।। भागवतपु० १०, ६०, २३

१. तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि। काव्यप्र० १, ४

२. काव्यशोभाकरान् धर्मानलङ्कारान् प्रचक्षते ॥ काव्याद० २, १

## द्वितीयोऽध्यायः

# रसविवेचनम्

### रसशब्दस्यार्थः

रस इति पदस्य व्युत्पत्तिरच्प्रत्ययान्ताद् घप्रत्ययान्ताद् वा रसयतेर्धातोर्जायते ।[1] पाणिनीयधातुपाठेऽयं धातुरास्वादनार्थे परिगणितः ।[2] अस्य शब्दस्य शब्दार्थचिन्तामणौ त्रिविधा व्युत्पत्तिः—

१. रसयतीति रसः २. रस्यत इति रसः ३. रस्यतेऽनेनेति रसः ।[3] आभिस्तिसृभिर्व्युत्पत्तिभिः समान एवार्थः प्रतिपाद्यते । इदानीमासां विषये संक्षेपेण विचार्यते—

**१. रसयतीति रसः**—यः खलु सामाजिकान् रसयति (आस्वादयति—आस्वादमानन्दं वा नयति) स रसः ।

**२. रस्यत इति रसः**—यो हि सामाजिकै रस्यते (आस्वाद्यते=आस्वादविषयीक्रियते) स रसः । रसस्वरूपवर्णनप्रसङ्गे विश्वनाथेनायं रसः कैश्चित् पुण्यवद्भिः प्रमातृभिरेवास्वाद्यत इति प्रोक्तम् ।[4] अनेनास्यास्वादविषयत्वं लक्ष्यते ।

---

१. रसः पुं० (···रस्+पचाद्यच् । यद्वा रस्यते इति रस् आस्वादने+पुंसि सञ्ज्ञायां घप्रायेणेति घः ।)—हलायुधकोशः (अभिधानरत्नमाला), पृ० ५६१ (सम्पादकः, जयशङ्करोजोशी, प्रकाशन-ब्यूरो, सूचनाविभागः, उत्तरप्रदेशः, प्रथमसंस्करणम्, २०१४ तमो वैक्रमाब्दः) ।

२. पाणिनीयधातुपाठः—रस आस्वादनस्नेहयोः, धातुस० १६३२

३. रसः···रसयति, आस्वाद्यते । रस आस्वादने चुरादिरदन्तः ।···रस्यते, आस्वाद्यतेऽनेन वा । कर्मणि घञ् । अल्लोपस्य स्थानिवत्वान्न वृद्धिः । सुखानन्दनाथकृतशब्दार्थचिन्तामणिश्चतुर्थो भागः, पृ० ७१ (सज्जनयन्त्रालयः, उदयपुरम्, १३ अक्तूबर १८८५)

४. लोकोत्तरचमत्कारप्राणः कैश्चित् प्रमातृभिः ।
स्वाकारवदभिन्नत्वेनायमास्वाद्यते रसः ॥ साहित्यद० ३, ३

पद्मचन्द्रकोशे शब्दोऽयमास्वाद्यापरनाम्नाऽभिहितः।[1] अनेनाप्यस्यास्वादविषयता स्फुटं ज्ञायते।

३. **रस्यतेऽनेनेति रसः**—यतो ह्यनेन रस्यते (आस्वाद आनन्दो वोत्पाद्यते) सामाजिकचेतस्यस्मादस्य रस इति नाम। शृङ्गारादयो हि रसाः सहृदयानां चेतसि रसं जनयन्तीत्यस्माद्धेतोस्तेषां रसविषयिकी करणता प्रतीयते। रसोत्पादनहेतुत्वादेव रुद्रटेनैषां रसत्वं स्वीकृतम्।[2] अत्र रसनादिति पदे करणे ल्युट् प्रयुक्तः।[3]

अस्य शब्दस्य प्रवृत्तिर्लोके विभिन्नेष्वर्थेषु दृश्यते। कतिपयेऽर्था अत्र प्रस्तूयन्ते—

१. कटुतिक्तकषायमधुराम्ललवणा इति षड् रसाः।

२. रसनामा पुरुषशरीरस्य धातुविशेषो यस्माद् रक्तं जायते।

३. विभावानुभावसञ्चारिणां स्थायिभावेन सह संयोगादुत्पन्नः काव्यशास्त्रसम्मतो रसः।

४. मोक्षाद् भक्तेर्वोत्पन्न आनन्दोऽपि रसनाम्ना प्रसिद्धः।

## अग्निपुराणवर्तिरसभागस्य वैशिष्ट्यम्

अग्निपुराणस्य ३३९ तमेऽध्याये शृङ्गारादयो रसा वर्णिताः। अन्येष्वपि काव्यलक्षणादिविषयकाध्यायेषु प्रसङ्गतो रससम्बन्धिनो विचारविशेषा अभिव्यक्ताः। विष्णुधर्मोत्तरपुराणस्य तृतीयखण्डस्य १७ तमेऽध्यायेऽपि रसविषयिणी वर्णना दृश्यते। अत्र तावद्रसादिविषयेऽग्निपुराणस्य विशिष्टान् विचारान् प्रस्तुत्य तैः सार्धं प्रसङ्गतो विष्णुधर्मोत्तरपुराणस्यापि स्वल्पं वैशिष्ट्यं प्रदर्श्यते।

**१. रसस्यादिहेतुः—**

अग्निपुराणे रसस्यादिकारणं ब्रह्मेति प्रतिपादितम्—

**अक्षरं परमं ब्रह्म सनातनमजं विभुम्।**
**वेदान्तेषु वदन्त्येकं चैतन्यं ज्योतिरीश्वरम्॥**

---

१. रस (पु०) रस्यते + अच्। आस्वाद्यः। गणेशदत्तशास्त्रिकृतः पद्मचन्द्रकोशः, पृ० ४११ (मेहरचन्द लछमनदास, लाहौर, प्रथमं संस्करणम्)।

२. रसनाद्रसत्वमेषां मधुरादीनामिवोक्तमाचार्यैः। काव्याल० १२, ४

३. करणाधिकरणयोश्च, अ० ३, ३, ११७।

**आनन्दः सहजस्तस्य व्यज्यते स कदाचन ।**
**व्यक्तिः सा तस्य चैतन्यचमत्काररसाह्वया ॥**[1]

सर्वातिशायि प्रत्नतमं जन्मरहितं सर्वव्यापकं च यद् ब्रह्म तदेव वेदान्तग्रन्थेष्वद्वितीयं चिदात्मकं प्रकाशात्मकमैश्वर्योपेतं चोक्तम् । एतादृशस्य ब्रह्मण आनन्दः स्वाभाविको धर्मः । तस्यानन्दस्य कदाचिदेवाभिव्यक्तिर्जायते । आनन्दस्येयमभिव्यक्तिरेव चैतन्यं वा चमत्कारो वा रसो वेति नामभिः प्रोच्यते ।

**आद्यस्तस्य विकारो यः सोऽहङ्कार इति स्मृतः ।**
**ततोऽभिमानस्तत्रेदं समाप्तं भुवनत्रयम् ॥**
**अभिमानाद्रतिः सा च परिपोषमुपेयुषी ।**
**व्यभिचार्यादिसामान्याच्छृङ्गार इति गीयते ॥**[2]

तस्य रसस्याद्या विकृतिरहङ्कारस्तस्माच्चाभिमानोऽजायत स तु त्रिभुवनमेतत्सर्वतो व्याप्य स्थितः । अस्मादेवाभिमानाद्रतिः प्रादुरभवत् । इयं रतिर्विभावानुभावव्यभिचारिभावानां स्थायिभावस्य च समानभावात् (सर्वगतत्वात्, सर्वेषां सामाजिकानां समानभावेन प्रतीतिविषयत्वाद्वा) परिपुष्टा सती श्रृङ्गार इति नाम्नाऽभिधीयते ।

एवमत्र रसस्य मूलकारणं ब्रह्म । तस्यादिमो विकार आनन्द एव काश्चिदवस्था अतिक्रम्य श्रृङ्गाररसरूपतां याति । अयं च श्रृङ्गारः प्रधानतमो मूलभूतश्च रसः ।

**तद्भेदाः काममितरे हास्याद्या अप्यनेकशः ।**
**स्वस्वस्थायिविशेषोऽथ परिघोषस्वलक्षणाः ॥**[3]

अस्य श्रृङ्गारस्यैव हास्यादयोऽनेके भेदाः । एषु च रसेषु प्रत्येकं रसस्य स्थायिभावो विद्यते । एषां श्रृङ्गारादिरसानां स्वरूपमेतेषां तत्तन्नामविशेषेणैव विशदीक्रियते ।

अग्निपुराणवर्णितं रसस्येदं स्वरूपं नितरामद्भुतम् । अन्यैराचार्यैं रसो ब्रह्मास्वादसहोदर इति प्रोक्तं परमग्निपुराणेनैव रसः साक्षाद्ब्रह्मणश्चैतन्यगुणस्य

१. अग्निपु० ३३९, १-२

२. तत्रैव ३३९, ३-४

३. तत्रैव ३३९, ५

विकार इति प्रतिपादितम् । एवमग्निपुराणोक्तरसस्वरूपमितराचार्यप्रतिपादितरसस्वरूपाण्यतिशेते ।

### २. रसस्य महत्त्वम्

अग्निपुराणेन काव्ये रसस्य स्थितिरेव नाङ्गीकृता, परं महाकाव्यस्य कृते रसोऽनिवार्यं तत्त्वं मतम् । अत्र काव्यस्येदं वैलक्षण्यं दर्शितम्—

**काव्यं स्फुरदलङ्कारं गुणवद्दोषवर्जितम् ।**[1]

यत्रालङ्काराणां स्फुटप्रयोगो गुणानामुपादानं दोषाणां च हानं तदेव काव्यम् । अत्र रसशब्दस्य निर्देशमात्रमपि न विहितमलङ्कारस्य गुणस्य चानिवार्यता प्रतिपादिता । अत्र महाकाव्यस्येदं लक्षणम्—

**सर्वरीतिरसैः स्पृष्टं पुष्टं गुणविभूषणैः ।**
**अतएव महाकाव्यं तत्कर्त्ता च महाकविः ॥**[2]

महाकाव्यं हि सर्वाभी रीतिभिः सर्वैं रसैर्गुणालङ्कारैश्चोपेतं शोभते, तस्य रचयिता च महाकविरित्युच्यते । अत्र हि महाकाव्यस्य कृते रसरीतिगुणालङ्काराणां सर्वेषामेवोपयोगित्वमङ्गीकृतम् ।

परमग्रतो महाकाव्यस्य कृते रसस्यैव प्राधान्यं प्रदर्शितम्—

**वाग्वैदग्ध्यप्रधानेऽपि रस एवात्र जीवितम् ।**
**पृथक्प्रयत्नं निर्वर्त्यं वाग्वक्रिम्णि रसाद् वपुः ॥**[3]

यद्यप्यत्र महाकाव्यं वाचो वैदग्ध्यमेव प्राधान्येनापेक्षते तथापि रस एव तस्मिन्नात्मत्वेनावतिष्ठते । अस्मात् कविना वाचां विक्रमेषु प्रयासं विसृज्य रसाविष्टं शरीरं निर्मेयम् । अत्र रसस्य प्राधान्यं सुविशदं प्रतिपादितम् । अन्यत्राप्येकस्मिन् स्थले काव्ये रसस्यापरिहार्या स्थितिरेवं प्रतिपादिता—

**लक्ष्मीरिव विना त्यागान्न वाणी भाति नीरसा ।**[4]

यथा विना दानेन श्रीर्न शोभते तथैव रसमन्तरेण वाणी (काव्यम्) न राजते ।

---

१. अग्निपु० ३३७, ७

२. तत्रैव ३३७, ३२

३. तत्रैव ३३७, ३३

४. तत्रैव, ३३६, ९

विष्णुधर्मोत्तरपुराणेऽपि रसस्यैतावदेव महत्त्वं प्रतिपादितम् । तत्र नाट्यस्य बन्धः (रचना) रसान्वितो विधेयो यतो हि नाट्ये रसस्यैव प्राधान्यमिति प्रतिपादितम् ।[1] अत्र नाट्ये रसस्यानिवार्या स्थितिरप्यङ्गीकृता ।[2] रसप्राधान्यप्रतिपादनविषये सरस्वतीकण्ठाभरणस्यापि मतमेतत्पुराणयोर्मताभ्यां सह संवदति ।[3]

### ३. कवेर्महत्त्वम्

अग्निपुराणे काव्यस्य रचयितुर्भृशं महत्त्वं निगदितम्—

**अपारे काव्यसंसारे कविरेव प्रजापतिः ।**
**यथा वै रोचते विश्वं तथेदं परिवर्तते ॥**
**शृङ्गारी चेत्कविः काव्ये जातं रसमयं जगत् ।**
**स चेत्कविर्वीतरागो नीरसं व्यक्तमेव तत् ॥[4]**

काव्यसंसारस्य निर्माता कविरेव । अस्मै यादृशं विषयवस्तु रोचते तादृशमेव स्वप्रतिभाबलेन सचमत्कारमाख्याति । यद्यसौ शृङ्गारप्रियस्तर्हि स भुवनमण्डलं शृङ्गाररसेनाप्लावितं कुरुते, परं तस्मिन् शान्तरसप्रिये सति काव्यजगदपि शान्तरसोपेतं जायते ।

सरस्वतीकण्ठाभरणस्यापि कविविषयकमेतादृशमेव मतम् ।[5]

### ४. रसः

अग्निपुराणे रसस्येदं लक्षणम्—

**कविभिर्योजनीया वै भावाः काव्यादिके रसाः ।**
**विभाव्यते हि रत्यादिर्यत्र येन विभाव्यते ॥[6]**

---

१. बन्धो रसानुगः कार्यः सर्वेष्वेतेषु यत्नतः ।
रसप्रधानमेवैतत्सर्वनाट्यं नराधिप ॥ विष्णुधपु० ३, १७, ६२

२. नाट्यस्य मूलं तु रसः प्रदिष्टो
रसेन हीनं न हि वृत्तमस्ति ।
तस्मात् प्रयत्नेन रसाश्रयस्य
वृत्तस्य यत्नं पुरुषेण कार्यम् ॥ तत्रैव ३, ३०, २८

३. वक्रोक्तिश्च रसोक्तिश्च स्वभावोक्तिश्च वाङ्मयम् ।
सर्वासु ग्राहिणीं तासु रसोक्तिं प्रतिजानते ॥ सरस्वतीक० ५, ८

४. अग्निपु० ३३९, १०-११

५. शृङ्गारी चेत्कविः काव्ये जातं रसमयं जगत् ।
स एव चेदशृङ्गारी नीरसं सर्वमेव तत् ॥

६. अग्निपु० ३३९, ३५

कविभिः प्रयोक्तव्या रत्यादिभावा एव काव्यादिषु रसा इति कथ्यन्ते। रसस्य चेदं लक्षणम्—यस्मिन् येन वा रत्यादिभावो विभाव्यते (साधारणीकरण-स्वरूपेण विभावनव्यापारेण प्रतीतियोग्यः क्रियते) स रसः।

**५. विभावादयः**

इमे हि विभावादयो भावशब्दान्तर्गता जायन्ते। नाट्ये भावस्योपयोगित्वमग्निपुराण एवं प्रदर्शितन्—

**न भावहीनोऽस्ति रसो न भावो रसवर्जितः।**
**भावयन्ति रसानेभिर्भाव्यन्ते च रसा इति ॥[1]**

भावात् (विभावानुभावसञ्चारिभावस्थायिभावेभ्यो) विना न रसो विभावादयोऽपि रसं विना न भवन्ति यतो हि लोके विना रसप्रसङ्गेन विभावादीनां न कोऽपि व्यवहारो दृश्यते। इमे भावा (विभावादयः) रसान् भावयन्ति (प्रतीतियोग्यान् विदधति) उत वा रसा एभिर्भाव्यन्ते।

अत्र भावशब्दस्य विभावानुभावसञ्चारिभावस्थायिभावेषु तात्पर्यम्। नाट्यशास्त्रेऽपि भावशब्देनैतेषामेव ग्रहणम्।[2] एवमत्राग्निपुराणे नाट्यशास्त्रस्य प्रभावः स्फुटं परिलक्ष्यते। इमे विभावादयश्चात्र सम्यग् विचारिताः।

**(कः) विभावः**—अग्निपुराणे रत्यादयो भावा यमाश्रित्य प्रादुर्भवन्ति स एव विभावस्तस्य चालम्बनोद्दीपनाख्यौ द्वौ भेदौ—

**विभावो नाम स द्वेधाऽऽलम्बनोद्दीपनात्मकः।**
**रत्यादिभाववर्गोऽयं यमाजीव्योपजायते ॥[3]**

---

१. अग्निपु० ३३९, १२

२. को दृष्टान्तः। अत्राह—यथा हि नानाव्यञ्जनौषधिद्रव्यसंयोगाद्रसनिष्पत्तिः तथा नानाभावोपगमाद्रसनिष्पत्तिः। यथा हि गुडादिभिर्द्रव्यैर्व्यञ्जनैरौषधिभिश्च षाडवादयो रसा निर्वर्त्यन्ते तथा नानाभावोपगता अपि स्थायिनो भावा रसत्वमाप्नुवन्ति।

नाट्यशा० ६, ३१, गद्यभागः

(···तथैव नानाभूतैर्विभावादिभिरुप-समीपं प्रत्यक्षकल्पतां गता लोकापेक्षया ये स्थायिनो भावास्ते···तत्रैवाभिनवभारतीव्याख्या)।

नानाभिनयसम्बद्धान्भावयन्ति रसानिमान्।
यस्मात्तस्मादमी भावा विज्ञेया नाट्ययोक्तृभिः ॥
नानाद्रव्यैर्बहुविधैर्व्यञ्जनं भाव्यते यथा।
एवं भावा भावयन्ति रसानभिनयैः सह ॥
न भावहीनोऽस्ति रसो न भावो रसवर्जितः ॥ नाट्यशा० ६, ३४-३६

३. अग्निपु० ३३९, ३६

नायकनायिकादय एवालम्बनविभावाः। नायकस्य धीरोदात्तादयश्चत्वारो भेदाः। प्रत्येकं भेदस्य चानुकूलादयश्चत्वार उपभेदाः। एवं षोडशविधो नायकः। नायिकाश्च कौशिकमतेन त्रिविधा—स्वकीया, परकीया पुनर्भूश्च। केषाञ्चिन्मते पुनर्भुवः स्थाने सामान्या नायिका। नायिकानामन्येऽपि बहवो भेदाः —

**आलम्बनविभावोऽसौ नायकादिभवस्तथा।**
**धीरोदात्तो धीरोद्धतः स्याद्धीरललितस्तथा॥**
**धीरप्रशान्त इत्येवं चतुर्धा नायकः स्मृतः।**
**अनुकूलो दक्षिणश्च शठो धृष्टः प्रवर्तिताः॥**
**स्वकीया परकीया च पुनर्भूरिति कौशिकाः।**
**सामान्या न पुनर्भूरित्याद्या बहुभेदतः॥**[1]

उद्दीपनविभावानामग्निपुराण इदं लक्षणम्—

**उद्दीपनविभावास्ते संस्कारैर्विविधैः स्थिताः।**
**आलम्बनविभावेषु भावानुद्दीपयन्ति ये॥**[2]

शकुन्तलादुष्यन्तादिष्वालम्बनविभावेषु ये खलु विविधसंस्काररूपेण स्थिता आलम्बनलस्य चेष्टादयस्त एवोद्दीपनविभावा एते च रत्यादिभावानुद्दीपयन्ति।

अग्निपुराणे महाकाव्यवर्ण्यविषयाणां प्रसङ्गत उद्दीपनविभावानामेवंविधं वर्णनम्—

**नगरार्णवशैलर्तुचन्द्रार्काश्रमपादपैः।**
**उद्यानसलिलक्रीडामधुपानरतोत्सवैः॥**
**दूतीवचनविन्यासैरसतीचरिताद्भुतैः।**
**तमसा मरुताप्यन्यैः · · ॥**
**· · स्पृष्टं पुष्टं गुणविभूषणैः।**
**अतएव महाकाव्यं तत्कर्त्ता च महाकविः॥**[3]

नगरसमुद्रपर्वतादिप्रदेशानामृतुचन्द्रसूर्याश्रमवृक्षादीनां गाढान्धकारस्य झञ्झावातस्य च वर्णनं महाकाव्येषु विधेयम्।

---

१. अग्निपु० ३३९, ३७-३८, ४१

२. तत्रैव ३३९, ४२

३. तत्रैव ३३७, २९-३२

(खः) **अनुभावः**—अग्निपुराणेऽनुभावस्येदं वर्णनम्—

**आलम्बनविभावस्य भावैरुद्बुद्धसंस्कृतैः ।**
**मनोवाग्बुद्धिवपुषां स्मृतीच्छाद्वेषयत्नतः ॥**
**आरम्भ एव विदुषामनुभाव इति स्मृतः ।**
**स चानुभूयते चात्र भवत्युत निरुच्यते ॥**[1]

स्मरणाभिलाषद्वेषप्रयासवशाद् दुष्यन्तादेरालम्बनविभावस्योद्बुद्धैः संस्कृतैश्च (करणभूतैः) भावैर्मनसो वाण्या बुद्धेः शरीरस्य च यः प्रतिक्रियारूपात्मको व्यापार उद्योगो वा स एव विद्वद्भिरनुभावत्वेन मतः । अनुभावस्य चेयं निरुक्तिः—अनुभूयत इत्यनुभाव उत अनु भवतीत्यनुभावः । अनुभावो हि दुष्यन्तादौ सामाजिकेनानुभूयते ज्ञानविषयो वाऽनुभवविषयो वा विधीयते । भ्रूविक्षेपकटाक्षरूपात्मकश्चायं शकुन्तलादिविलोकनानन्तरमेव (अनु = पश्चात् भवति) जायते ।

(गः) **व्यभिचारिभावाः**—अग्निविष्णुधर्मोत्तरपुराणयोर्व्यभिचारिभावानां न किमपि सामान्यं लक्षणम् । परमेतेषां नामान्यत्र निर्दिष्टानि । अग्निपुराणे त्रिंशद्व्यभिचारिभावानामिमानि नामानि— १. निर्वेदः २. ग्लानिः ३. शङ्का ४. असूया ५. मदः ६. श्रमः ७. आलस्यम् ८. दैन्यम् ९. मोहः १०. स्मृतिः ११. मतिः १२. क्रीडा १३. चपलता १४. हर्षः १५. आवेशः १६. जडता १७. धृतिः १८. गर्वः १९. विषादः २०. औत्सुक्यम् २१. अपस्मारः २२. वीप्सा २३. अमर्षः २४. प्रबोधः २५. अवहित्था २६. उग्रता २७. ऊहा २८. व्याधिः २९. उन्मादः ३०. शमश्च । एषु प्रतिव्यभिचारिभावस्यात्र विशेषलक्षणमप्युपलभ्यते ।[2]

विष्णुधर्मोत्तरपुराणे च त्रयस्त्रिंशदिमे व्यभिचारिभावाः —

१. निर्वेदः २. ग्लानिः ३. शङ्का ४. असूया ५. मदः ६. श्रमः ७. आलस्यम् ८. दैन्यम् ९. मोहः १०. स्मृतिः ११. वृत्तिः (मतिः) १२. क्रीडा १३. व्रीडा १४. चपलता १५. हर्षः १६. आवेगः १७. विषादः १८. औत्सुक्यम् १९. निद्रा २०. अपस्मारः २१. सुप्तत्वम् २२. बोधः २३. अमर्षः २४. अवहित्था २५. उन्मादः २६. मरणम् २७. त्रासः २८. सन्देहः २९. औग्र्यम् ३०. चिन्ता ३१. व्याधिः ३२. जडता ३३. धृतिश्च ।[3]

---

१. अग्निपु० ३३९, ४४-४५

२. तत्रैव ३३९, २२-३४

३. विष्णुधपु० ३, ३१, ११-५१

अत्राप्येषां भावानां विशेषलक्षणानि दृश्यन्ते ।

**(घः) स्थायिभावाः**—अग्निपुराणे स्थायिभावस्य न किमपि सामान्यं लक्षणम् । विष्णुधर्मोत्तरपुराणेऽस्येदं लक्षणम्—

**बहूनां समवेतानां रूपं यस्य भवेद बहु ।**
**स मन्तव्यो रसः स्थायी शेषाः सञ्चारिणः स्मृताः ।।**[1]

एवं यत्र बहवो भावा एकत्र समवेतास्तत्र यस्य भावस्य प्राधान्यं जायते तस्यैव स्थायिभाव इति संज्ञा । अग्निपुराणे विष्णुधर्मोत्तरपुराणे चेमेऽष्टौ स्थायिभावाः—

१. रतिः २. हासः ३. शोकः ४. क्रोधः ५. उत्साहः ६. भयम् ७. जुगुप्सा ८. विस्मयश्च ।[2]

## साधारणीकरणसिद्धान्तपरम्परा तत्र चाग्निपुराणस्य मतम्

### साधारणीकरणस्यार्थः

साधारणीकरणमिति शब्देऽभूततद्भावे कृभ्वस्तियोगे सम्पद्यकर्त्तरि च्विरिति सूत्रेणाभूततद्भावे ल्युट्प्रत्ययान्तात् करोतेश्च्विप्रत्ययः (साधारण + च्वि + कृ + ल्युट् )[3] ल्युट्प्रत्ययश्चात्र भावे[4] करणाधिकरणयोश्च[5] प्रयुक्तः । शब्दस्यास्येत्थं व्युत्पत्तिरसाधारणं साधारणं सम्पद्यते तस्य भावो वा करणं वाऽऽधिकरणं वैतानर्थानवगमयति ।

काव्यशास्त्रेऽपि शकुन्तलाद्यसाधारणस्य (विशेषस्यासर्वगतस्य वा वस्तुनः) यः साधारणीभावः (निर्विशेषत्वं सर्वगतत्वं वा) स साधारणीकरणमित्युच्यते । अपरञ्च करणभूतेन येन व्यापारेण किं वाधिकरणभूते यत्र व्यापारे शकुन्तलाद्यसाधारणं साधारणं क्रियते सोऽपि साधारणीकरणमित्यभिख्यां

---

१. विष्णुधपु० ३, ३१, ५३
२. अग्निपु० ३३६, १३-१६; विष्णुधपु० ३, ३१, २-१०
३. अ० ५, ४, ५०
४. ल्युट् च । तत्रैव ३, ३, ११५
५. करणाधिकरणयोश्च । तत्रैव ३, ३, ११७

लभते। एवं साधारणीकरणमिति शब्दः साधारणीभावं साधारणीभावस्य करणं (= हेतुः) साधारणीभावस्याधिकरणम् (= आधारः) चेत्यर्थत्रयं बोधयति।

## साधारणीकरणसिद्धान्तपरम्परा

### १. भट्टनायकः

साधारणीकरणसिद्धान्तस्यादिमः प्रवर्तको भट्टनायकः। काव्यप्रकाशे तन्मतमेवं प्रतिपादितम्—न ताटस्थ्येन नात्मगतत्वेन रसः प्रतीयते नोत्पद्यते नाभिव्यज्यतेऽपितु काव्ये नाट्ये चाभिधातो द्वितीयेन विभावादिसाधारणीकरणात्मना भावकत्वव्यापारेण भाव्यमानः स्थायी सत्त्वोद्रेकप्रकाशानन्दमयसंविद्विश्रान्तिसतत्त्वेन भोगेन भुज्यत इति भट्टनायकः।[1]

अस्य रसस्य रामादावनुकार्ये नोत्पत्तिः (अत्र भट्टलोल्लटमतनिरासः) न चोदासीनतां गतवति नटाद्यनुकर्तर्यनुमितिः (अत्र श्रीशङ्कुकमतनिरासः) न चापि (व्यञ्जनया) सामाजिकेऽस्याभिव्यक्तिः (अत्राभिनवगुप्तमतेन सह विसंवादः) जायते। परं काव्ये नाट्ये चाभिधालक्षणाभ्यां भिन्नेनापरेण, विभावादीनां साधारणीभावस्य विधात्रा भावकत्वव्यापारविशेषेण साधारणीक्रियमाणः स्थायिभाव एव भोजकत्वव्यापारेणास्वाद्यते। अस्मिन् हि भोजकत्वव्यापारे सत्त्वसमुद्रेको जायते तेन च रजस्तमसी अभिभूय प्रकाशात्मिकाऽऽनन्दात्मिका ज्ञेयान्तरसम्पर्कशून्यमनोदशाविशेषानुरूपा चानुभूतिः प्रादुर्भवति।

एवं भट्टनायकेनास्या रसप्रक्रियाया अभिधाभावकत्वभोजकत्वाख्यास्त्रयो व्यापाराः स्वीकृताः। प्रथमं तावत्सामाजिकेनाभिधया काव्यस्य नाट्यस्य वा वाच्यार्थो ज्ञायते, अनन्तरं भावकत्वव्यापारेण विभावादीनां स्थायिभावस्य च साधारणीभावो जायते पश्चाच्च साधारणीक्रियमाणः स्थायिभावो भोजकत्वव्यापारेण रसरूपतां गमयित्वा सामाजिकस्यास्वाद्यते।

अयं भावकत्वव्यापार एव साधारणीकरणम्—यथोक्तं भट्टनायकमतं व्याख्यायता प्रदीपकारेण—

भावकत्वं साधारणीकरणम्। तेन हि व्यापारेण विभावादयः स्थायी च साधारणीक्रियन्ते। साधारणीकरणं चैतदेव यत्सीतादिविशेषाणां कामिनीत्वादि-

---

१. काव्यप्र० ४, २८ गद्यभागे भट्टनायकतम्

सामान्येनोपस्थितिः। स्थाय्यनुभावादीनां च सम्बन्धिविशेषानवच्छिन्नत्वेन।[1]

अस्यायमभिप्रायः। भावकत्वमेव साधारणीकरणमित्युच्यते। तेन हि व्यापारेण विभावादीनां स्थायिभावस्य च साधारणीकरणं विधीयते। सीतादिविशिष्टव्यक्तीनां स्त्रीसामान्यभावेनोपस्थितिरेव साधारणीकरणस्य स्वरूपम्। तदानीं हि सीतायाः स्वरूपं स्त्रीसामान्यमात्रमवशिष्यते। अपरञ्चास्मिन् व्यापारे स्थायिभावा अनुभावादयश्च सम्बन्धविशेषान्मुच्यन्ते। कोऽपि सम्बन्धविशेषः केनचिदपि सीम्ना न तान् निबध्नाति। यथा हि सीतादयो विभावाः स्त्रीसामान्यभावमापद्यन्ते तथैव स्थाय्यनुभावादयोऽपि कस्याश्चिद् विशिष्टाया व्यक्तेः सम्बन्धाद्विमुच्य सम्बन्धिसामान्येन सहात्मानमनुबध्नन्ति। तस्मिन् क्षणे नालम्बनेन न च सामाजिकेन सार्धं तेषां कोऽपि सम्बन्धविशेषः। यदि तेषामवस्थितिः केवलमेकस्मिन्नालम्बन एवाङ्गीक्रियेत तर्ह्येकस्यालम्बनस्य भावा अपरस्मिन् सामाजिके कथं संक्रमेयुः। सामाजिकानामपि तान् प्रति ममत्वपरत्वबुद्धिर्न जायतेऽन्यथा तेऽपि रसमास्वादयितुं न क्षमेरन्। एवं भट्टनायकमतेन साधारणीकरणप्रक्रियायां पूर्वं विभावानुभावसञ्चारिभावानां पश्चाच्च स्थायिभावस्य साधारणीभावो जायते।

## २. अभिनवगुप्तः

भट्टनायकेन साधारणीकरणस्य यत्स्वरूपं प्रतिपादितं तदेवाभिनवगुप्तेनाप्यङ्गीकृतम्। एतेनापि व्यापारेऽस्मिन् विभावादयः स्थायिभावश्च साधारणीक्रियन्त इति प्रतिपादितम्। परं साधारणीकरणप्रक्रियां प्रतिपादयताऽनेन ध्वननव्यापारस्य सामाजिकस्य च महत्त्वं सविशेषं प्रतिपादितम्। अस्य मतस्य स्वरूपं काव्यप्रकाशे मम्मटेनैवं प्रदर्शितम्—

लोके प्रमदादिभिः स्थाय्यनुमानेऽभ्यासपाटववतां काव्ये नाट्ये च तैरेव कारणत्वादिपरिहारेण विभावनादिव्यापारवत्त्वादलौकिकविभावादिशब्दव्यवहार्यैर्ममैवैते शत्रोरेवैते, न ममैवैते न शत्रोरेवैते न तटस्थस्यैवैते इति सम्बन्धविशेषस्वीकारपरिहारनियमानध्यवसायात् साधारण्येन प्रतीतैरभिव्यक्तः सामाजिकानां वासनात्मतया स्थितः स्थायी रत्यादिको नियतप्रमातृगतत्वेन स्थितोऽपि साधारणोपायबलात् तत्कालविगलितपरिमितप्रमातृभाववशोन्मिषितवेद्यान्तरसम्पर्कशून्यापरिमितभावेन प्रमात्रा सकलसहृदयसंवादभाजा साधारण्येन···गोचरीकृतः···

---

१. काव्यप्र० ४, २८ काव्यप्रदीपटीकायां भट्टनायकमतम्।

चर्व्यमाणः…श्रृङ्गारादिको रसः ।[1]

अस्मिन् जगति रूपगुणसम्पन्नैर्योषिदादिकारणै रत्यादिस्थायिभावस्यानुमितौ व्युत्पन्नधियां सामाजिकानां यो नाम रत्यादिस्थायिभावो वासनात्मतया सन्तिष्ठते स तैरेव योषिदादिकारणैः (विभावैः) काव्येषु नाट्येषु चाभिव्यज्यते । विभावनादिव्यापारबलाच्चेमानि प्रमदादिकारणानि यदा स्वकीयं लौकिकं कारणात्मकादिस्वरूपं परित्यजन्ति तदाऽलौकिकविभावादीनां नामानि गृह्णन्ति । तदानीमिमे विभावादयो मत्सम्बन्धिन एव, शत्रुसम्बन्धिन एव, तटस्थसम्बन्धिन एव, न मत्सम्बन्धिनो न शत्रुसम्बन्धिनो न तटस्थसम्बन्धिनश्चेत्येवंविधेषु सम्बन्धविशेषेषु कस्यचिदपि सम्बन्धविशेषस्य कृते विध्यात्मको निषेधात्मको वा नियमो नैषां विभावादीनां कृते निर्धारयितुं शक्यते । तस्मिन् क्षणे ह्येते विभावादयः सामान्येन (निर्विशेषेण) प्रतीयन्ते । यद्यप्येष रत्यादिस्थायिभावः प्रत्येकं सामाजिकस्य हृदये व्यष्टिरूपेणावतिष्ठते परं यदा साधारणीकृतविभावादिभिः प्रत्येकं सामाजिकस्य परिमितप्रमातृभावस्तत्कालं समाप्यते ज्ञेयान्तरसम्पर्करहितश्चापरिमितप्रमातृभाव आविर्भवति तदैष रत्यादिस्थायिभावः सर्वैरेव सामाजिकैरैकमत्येन ( सदृशानुभूत्या सह ) समानभावेन ( सर्वगतत्वेन ) चानुभूयमानः श्रृङ्गारादिरसरूपेणास्वाद्यते ।

एवं भट्टनायकमतमनुकुर्वताभिनवगुप्तेनापि प्रथमं विभावादीनामनन्तरं च स्थायिभावस्य साधारणीकरणं जायत इति प्रतिपादितम् । अभिनवगुप्तमतेन भावकत्वभोजकत्वव्यापारयोः कल्पनाऽपार्था । अभिधया अनन्तरं भावकत्वभोजकत्वाभ्यां च व्यापाराभ्यां यत्खलु कार्यं सम्पाद्यते तत्सर्वंभिधातिरिक्तेन ध्वननव्यापारेणैव विधीयत इत्येतत्तस्य मतं ध्वन्यालोकलोचने दृश्यते ।[2]

वस्तुतो द्वावेव व्यापाराविमौ सामाजिकनिष्ठौ न तु शब्देन सहैतयोः सम्बन्धः । यदा सामाजिको वाच्यार्थं गृहीत्वा शकुन्तलात्मकं विभावं भावयति तदा विभावादेः स्थायिभावस्य च सम्पन्नायां साधारणीकरणप्रक्रियायां तस्य हृदये वासनात्मकतयास्थितो रत्यादिस्थायिभावः स्वयमेवोद्बुध्यते । उद्बुद्धश्चायं यदा रसरूपेण परिणमति तदा प्रकृत्यैव सामाजिकस्यास्वाद्यो जायते । अतएव वाच्यार्थ-

---

१. काव्यप्र० ४, २८ गद्यभागे – अभिनवगुप्तमतम्

२. …वाच्यवाचकयोस्तत्राभिधादिविविक्तो व्यञ्जनात्मा ध्वननव्यापार एव । भोगीकरणव्यापारश्च काव्यस्यरसविषयो ध्वननात्मैव । नान्यत् किञ्चित् । … न च काव्यशब्दानां केवलानां भावकत्वम् । अर्थापरिज्ञाने तदभावात् । न च केवलानामर्थानाम् । शब्दान्तरेणार्प्यमाणत्वे तदयोगात् । … इति त्र्यंशायामपि भावनायां कारणांशे ध्वननमेव निपतति । ध्वन्या० २, ४ लोचनाख्यव्याख्यायां गद्यभागः

ग्रहणानन्तरं सामाजिकहृदये रसानुभूतेः स्वतः सम्भाव्यमानत्वादनयोर्व्यापारयोः कल्पनायाः कृते कोऽप्यवकाशो नैवावशिष्यते। रसो हि भोजकत्वव्यापारेण भुज्यत इति वाक्यं तु दिवसो हि दिवसदर्शकत्वव्यापारेण दृश्यत इति वाक्यवदपार्थं प्रतीयते।

अपरञ्च भट्टनायकेन विभावादीनां स्थायिभावस्य च साधारणीकरण-प्रक्रिया तु सम्यक् प्रतिपादिता परमेतस्मिन् व्यापारे सामाजिकस्य कीदृशी स्थिति-र्जायत इति न प्रतिपादितम्। अभिनवगुप्तेन तु सामाजिकस्यावस्था सम्यङ् निरूपिता। तन्मतैनैतस्मिन् काले प्रमाता तदनुभूतयश्चापरिमितभावभाग्नुवन्ति। अस्यां हि दशायां न केवलं सामाजिकस्यापरिमितप्रमातृभावेनात्मनो विस्तरोऽपितु तस्य वेद्यान्तरसम्पर्कशून्यस्वरूपाऽनुभूतिरप्यपरिमिता जायते।

## ३. धनञ्जयः

अभिनवगुप्तादनन्तरं दशरूपकाख्ये ग्रन्थे साधारणीकरणप्रक्रियाया रसस्य च स्वरूपं सविस्तरं विशदीकृतम्।' एष ग्रन्थो धनञ्जयेन लिखितो धनिकेन च तस्यावलोकाख्या व्याख्या विहिता। सावलोके दशरूपके विभावादीनां साधारणी-करणं प्रश्नोत्तररीत्यैवं प्रतिपादितम्—

ननु च सामाजिकाश्रयेषु रसेषु को विभावः कथं च सीतादीनां देवीनां विभावत्वेनाविरोधः। उच्यते—

**धीरोदात्ताद्यवस्थानां रामादिः प्रतिपादकः।**
**विभावयति रत्यादीन् स्वदन्ते रसिकस्य ते॥**
**ता एव च परित्यक्तविशेषा रसहेतवः।**

तत्र सीतादिशब्दाः परित्यक्तजनकतनयादिविशेषाः स्त्रीमात्रवाचिनः किमिवानिष्टं कुर्युः किमर्थं तर्ह्युपादीयन्त इति चेत्? उच्यते—

**क्रीडतां मृण्मयैर्यद्वद्बालानां द्विरदादिभिः।**
**स्वोत्साहः स्वदते तद्वच्छ्रोतृणामर्जुनादिभिः॥**[1]

सामाजिकनिष्ठोऽयं शृङ्गारादिको रस इति पक्षे— कः खलु सामाजिकस्य विभावो यमाश्रित्य तस्य रत्यादिस्थायिभाव उद्बुध्य रसरूपतां याति कथं तस्य सीतादिभिः पूजनीयाभिर्देवताभिः सार्धं विषयमूलकं तादात्म्यं सम्भवेत् कथं च तदा सीतादीनां विभावत्वं स्यादित्यादिप्रश्नानां समाधानमेवं विधीयते—नाट्येषु

---

१. सावलोके दशरूपके ४, ४०-४२

वर्णिताः सीतारामादयोऽनुकार्याः स्वानुकूलधीरोदात्ताद्यवस्थानां प्रतीकरूपाः। एतादृशं भावमापन्नाश्चेमे सामाजिकस्य यान् रत्यादिभावानुद्बोधयन्ति तानेव सामाजिक आस्वदते। इदानीमिमे सीतारामादयः सीतात्वरामत्वाद्यात्मकं स्वकीयं स्वरूपविशेषमुत्सृज्य नायकनायिकामात्रं सामान्यं स्वरूपं गृह्णन्ति। एवमेव ते रसकारणानि जायन्ते।

परं यदा सीतादयः शब्दा जनकतनयात्वादिस्वकीयं विशिष्टं रूपमुत्सृज्य स्त्रीसामान्यात्मकं स्वरूपं धारयन्ति तदा सीतादिविभावं प्रति सामाजिकस्य स्त्री-सामान्यात्मिकाया बुद्धेर्भावात्कथं तेन श्रद्धामिश्रिता सीतादिविषयिका विशिष्टा रतिरनुभूयेतेत्याशङ्क्य कथ्यते—मृदा निर्मितैर्गजादीनां क्रीडनकैः सह क्रीडन्तो बालास्तस्मिन्नवसरे वयमदानीं (परमार्थतः) गजैः सार्धं क्रीडाम इति मन्यन्ते। गजादिषु चोत्साहादिभावं दृष्ट्वा यदा तेषामप्युत्साहादिस्थायिभाव उद्बुध्यति तदा तैरानन्दोऽनुभूयते। एवमेवार्जुनादिपात्राणामुत्साहादिभावं दृष्ट्वा श्रोतारः स्वहृदयेष्वपि वीरादिरसरूपेण परिणतमुत्साहादिभावं स्वदन्ते। यद्यप्यर्जुनादीनि पात्राणि केवलं प्रतिकृतय एव न तेषां काव्येषु नाट्येषु च वास्तवरूपं, परं तस्मि-न्नवसरेऽर्जुनादीनामनुकृतिविधातॄन् नटादीनेव सामाजिकः परमार्थतोऽर्जुनादि-भावेन मन्यते।

भट्टनायकेनाभिनवगुप्तेन च पूर्वं विभावादीनां पश्चाच्च स्थायिभावस्य साधारणीभावो जायत इति प्रतिपादितम्। अभिनवगुप्तेन सामाजिकस्यापरिमित-प्रमातृभावोऽपि सविशेषं प्रतिपादितः। यद्यपि धनञ्जयेन नैतत्सर्वं स्पष्टतया विशदीकृतं तथापि तेन साधारणीक्रियमाणा विभावादय एव रसहेतवो रसश्च सामाजिकनिष्ठ इत्येवंविधं यत्किमपि लिखितं तस्य साधारणीकरणसिद्धान्तपरम्प-रायां ध्रुवमेवोपयोगित्वम्। शङ्कुकस्य चित्रतुरगादिन्याय एव धनञ्जयेन मृण्मय-द्विरदादिन्यायत्वेनाङ्गीकृतः। शङ्कुकेन तु रसस्य स्थिती रामादावनुकार्येषु मता परमभिनवगुप्तमतमनुसरता धनञ्जयेन रसः सामाजिकनिष्ठो मतः। भट्टनायकेन रसस्य स्थितिः सामाजिक एवेति विषये सङ्केतमात्रं विहितं परं तत्र सामाजिकस्य स्थितिः सविस्तरं स्पष्टतया च न विचारिता। अस्मिन् विषये धनञ्जयमतं भट्ट-नायकमतमतिशेते।

## ४. विश्वनाथः

अनेन साहित्यदर्पणाख्ये ग्रन्थे साधारणीकरणस्य स्वरूपमेवं प्रति-पादितम्—

**व्यापारोऽस्ति विभावादेर्नाम्ना साधारणीकृतिः।**
**तत्प्रभावेण यस्यासन् पाथोधिप्लवनादयः॥**

प्रमाता तदभेदेन स्वात्मानं प्रतिपद्यते
उत्साहादिसमुद्बोधः साधारण्याभिमानतः ।।
नृणामपि समुद्रादिलङ्घनादौ न दुष्यति ।
साधारण्येन रत्यादिरपि तद्वत् प्रतीयते ।।
परस्य न परस्येति ममेति न ममेति च ।
तदास्वादे विभावादेः परिच्छेदो न विद्यते ।।[1]

काव्येषु नाट्येषु च वर्णितानां विभावानुभावसञ्चारिभावानां स्थायिभावस्य चयः साधारणीकरणाख्यो व्यापारविशेषो तस्य खलु विद्यते काऽप्यलौकिकी शक्तिः। व्यापारस्यास्य प्रतापेनैव यस्य हनुमदादेः समुद्रोल्लङ्घनादिकर्माण्यासन् तेन सह प्रमातुस्तादात्म्यं जायते अस्माच्च तादात्म्यसम्बन्धात् प्रमाताऽऽत्मानं हनुमदादिमेवाभिमन्यते। परमेतेषां देवानां समुद्रलङ्घनादीनि कर्माणि प्रति मानवभूतानां सामाजिकानामुत्साहादिभावः कथं जायेतेत्याशङ्क्यात्रेदमुच्यते—यद्यपि समुद्रलङ्घनादिकर्माणि मानवानां सामाजिकानां कृते दुष्कराणि परं हनुमदादिपात्रविशेषैः सह तेषां साधारणात्मिका (निर्विशेषात्मिका) प्रतीतिर्जायते । अस्मात्तेषामपि तादृशेषु कर्मसूत्साहादिभाव उद्बुध्यते। अनेन हनुमदादिष्विव सामाजिकेष्वप्यलौकिकोत्साहादिभावानामङ्गीकरणे न कोऽपि दोषः।

साधारणीक्रियमाणा इमे विभावादयः सर्वगताः सन्तः सामाजिकैरास्वाद्यन्ते। आस्वादनसमये चेमे विभावादयो मत्सम्बन्धिन एव, न मत्सम्बन्धिनो वा परसम्बन्धिन एव, न परसम्बन्धिनो वा चेत्येवंविधं किमपि समर्यादं निश्चयात्मकं वा ज्ञानमेतेषां विषये न जायते।

भट्टनायकाभिनवगुप्तौ पूर्वं विभावादीनां पश्चाच्च स्थायिभावस्य साधारणीकरणं जायत इत्यङ्गीकृतवन्तौ। विश्वनाथस्य मतमप्येवंविधमेव। तन्मतेन प्रथमं प्रमातुर्हनुमदादिभिः सार्धं तादात्म्यं जायते येन स आत्मानं हनुमदादिं मन्यमानस्तस्य समुद्रोल्लङ्घनादिकर्माण्यपि स्वीयानीव विगणयति। अनन्तरमेव तस्य (प्रमातुः) उत्साहादिभावस्याश्रयस्योत्साहादिभावेन सह तादात्म्यं जायते।

विश्वनाथस्य साधारणीकरणस्वरूपमभिनवगुप्तमतमेवानुसरति परं तेन तादात्म्यसम्बन्धं परिकल्प्याभिनवगुप्तमतं सविशेषं विशदीकृतम्। तादात्म्यभावनिरूपणमेवास्य मतस्य वैशिष्ट्यम्।

उपरिवर्णिताः सर्व एवाचार्या रसनिष्पत्तौ पूर्वं विभावादीनां पश्चाच्च

---

1. साहित्यद० ३, ९-१३

स्थायिभावस्य साधारण्यं जायत इत्यैकमत्येन स्वीकुर्वन्ति ।

## अग्निपुराणस्य मतम्

अस्मिन् पुराणे रसनिष्पत्तिवर्णनप्रसङ्गत एव साधारणीकरणसिद्धान्तः शब्दान्तरेण निर्दिष्टः । पूर्ववर्णितेषु मतेषु तावत्साधारणीकरणस्यार्थद्योतनाय साधारण्यमित्यादयः शब्दाः प्रयुक्ताः परमत्रैतस्मिन्नेवार्थे सामान्यमिति शब्दस्य प्रयोगः । श्लोकश्चायम्—

**अभिमानाद्रतिः सा च परिपोषमुपेयुषी ।**
**व्यभिचार्यादिसामान्याच्छृङ्गार इति गीयते ।।**[1]

अभिमानाज्जातो रतिस्थायिभावो विभावानुभावव्यभिचारिभावानां स्थायिभावस्य च सर्वेषु सामाजिकेषु समानतया विद्यमानत्वात् (सर्वविषयत्वात् सर्वगतत्वाद्वा) परिपुष्टिङ्गतः सन् शृङ्गारो रस इति कथ्यते ।

सामान्यमितिशब्दोऽस्मिन्नेव पुराणेऽन्यत्र नाटकनिरूपणप्रकरणे सर्व-विषयत्वसर्वगतत्वार्थयोर्व्यवहृतः ।[2]

एवमग्निपुराणेऽपि विभावादीनां स्थायिभावस्य च साधारणीकरणं जायत इति मतं प्रतिपादितम् । अस्येदं मतं भट्टनायकादीनामाचार्याणां मतानि सर्वथाऽनुसरति ।

परमग्निपुराणस्याधोलिखितैः श्लोकैरिदं मतमतमभिव्यज्यते—

**अपारे काव्यसंसारे कविरेव प्रजापतिः ।**
**यथा वै रोचते विश्वं तथेदं परिवर्तते ॥**
**शृङ्गारी चेत्कविः काव्ये जातं रसमयं जगत् ।**
**स चेत्कविर्वीतरागो नीरसं व्यक्तमेव तत् ।।**[3]

---

१. अग्निपु० ३३६, ४

२. सामान्यं सर्वविषयं विशेषः क्वापि वर्तते ।
रसाभावविभावानुभावा अभिनयास्तथा ।
अङ्कः स्थितश्च सामान्यं सर्वत्रैवोपसर्पणात् ॥ अग्निपु० ३३८, ५-६

३. तत्रैव ३३९, १०-११

अस्मिन्नपारे काव्यजगति कविरेव केवलं स्रष्टा यतो ह्ययं लोको यथास्मै रोचते तथैवासावेतं परिणमति। यद्येष कविः स्वकीयरचनायां शृङ्गाररसमङ्गीकरोति तर्हीदं भुवनमण्डलमनेनाप्लावितं जायते। परं यद्यसौ शान्तरसप्रियस्तर्हि तेनाभिव्यक्तमिदं काव्यजगदपि शान्तरससंवलितं स्यात्। अस्यैदं तात्पर्यम्— कविर्यादृशान् भावान् स्वकाव्येऽभिव्यनक्ति तादृशानेव भावांल्लोकोऽप्यनुभवति।

अपि च—

**कविभिर्योजनीया वै भावाः काव्यादिके रसाः।**
**विभाव्यते हि रत्यादिर्यत्र येन विभाव्यते ॥[1]**

काव्यनाट्यादिषु कविभिः प्रयोक्तव्या भावाः (विभावानुभावसञ्चारिभावाः स्थायिभावश्च) एव रसाः। रसस्य चेदं लक्षणम्—यत्र (विभावादिसहितः) रत्यादिभावो विभाव्यते (प्रतीतियोग्यः) विधीयते किंवा येन (विभावादिसहितः) रत्यादिभावो विभाव्यते स रसः। अस्यायमभिप्रायः— त एव विभावादयो भावा रससञ्ज्ञां लब्धुं क्षमा ये पूर्वं कविना सम्यक्तया भाविताः (पूर्वं स्वयमनुभूताः पश्चाच्च काव्ये नाट्ये च स्वकौशलेन सम्यङ् निरूपिताः)। इमे हि भावाः पूर्वं कविना स्वकाव्ये नाट्ये वा सम्यक्तया भाव्यन्ते (निरूप्यन्ते) अनन्तरं च नटादिना स्वचेतसि विभाव्यावस्थानुकृत्या प्रदर्श्यन्ते तदनन्तरं प्रदर्श्यमानान् तानवलोक्याश्रयेण सह तादात्म्यभावमवाप्य च सामाजिकाः स्वहृदयेषूद्बुद्धान् रसरूपतया परिणतान् तान् स्थायिभावाननुभवन्ति। अत्र विभाव्यते इति पदस्य साधारणीक्रियत (आस्वादाङ्कुरप्रादुर्भावयोग्यः क्रियते) इत्यप्यर्थः संभवति यतो हि साधारणीकरणव्यापारादृते रत्यादिभावो रसरूपतां गन्तुं न क्षमते।[2]

एवमत्राग्निपुराणेन कविकल्पितानामेव विभावादीनां साधारणीकरणं जायत इत्यस्य मतस्य प्रतिपादनं विहितम्। आचार्यनन्ददुलारेवाजपेयीनामधेयस्य हिन्दीवाङ्मयस्य प्रमुखालोचकस्य मतमग्निपुराणस्यापरेण मतेन सह सर्वथा संवदति। तन्मतस्य द्वित्राणां पंक्तीनां संस्कृतेनानुवादोऽत्र प्रस्तूयते—

'''साधारणीकरणस्यार्थो रचयितुरुपभोक्तुश्च (कवेः सामाजिकस्य च)

---

१. अग्निपु० ३३६, ३५

२. यथा हि गुडादिभिर्द्रव्यैर्व्यञ्जनैरौषधिभिश्च षाडवादयो रसा निर्वर्त्यन्ते तथा नानाभावोपगता अपि स्थायिनो भावा रसत्वमाप्नुवन्तीति। नाट्यशा० ६, ३१ गद्यभागः
'' तथैव नानाभूतैर्विभावादिभिरुप-समीपं प्रत्यक्षकल्पतां गता लोकोपेक्षया ये स्थायिनो भावास्ते रस्यमानतैकजीवितं रसत्वं तत्र प्रतिपद्यन्ते। (तत्रैवाभिनवभारती व्याख्या)

मध्ये भावनायास्तादात्म्यमेव । साधारणीकरणं वस्तुतः कविकल्पितसमस्तव्यापारस्यैव सञ्जायते न तु कस्यचित्पात्रविशेषस्य ।[1]

यद्यपि साधारणीकरणपरम्परायामर्वाचीनहिन्दीकाव्यशास्त्रज्ञाचार्यरामचन्द्रशुक्लादिविदुषां मतान्यपि विचारार्हाणि परं प्रबन्धस्यास्य पुराणविषयेन सहैव सम्बद्धत्वाद् विस्तरभिया चात्रैव विरम्यते ।

## अग्न्यादिपुराणेषु रसानां स्वरूपं प्रयोगाश्च

अग्निपुराणस्य कतिपयेष्वध्यायेषु रसविषयो विवेचितः । एतत्पुराणवर्तिकाव्यशास्त्रीयभागस्य यः कालः पूर्वमलङ्कारप्रकरणे प्रदर्शितः स एवास्य रसभागस्यापि विद्यते । विष्णुधर्मोत्तरपुराणेऽपि रसमधिकृत्य विचारो विहितः । एतयोः पुराणयोरिमे नवरसाः संख्याताः —

१. शृङ्गारः २. हास्यः ३. करुणः ४. रौद्रः ५. वीरः ६. भयानकः ७. बीभत्सः ८. अद्भुतः ९. शान्तश्च ।[2]

अग्निपुराणे शृङ्गाररसस्य प्राधान्यं प्रोच्य हास्यादयो रसाः शृङ्गारस्यैव भेदा इमे च सर्वे परमात्मनः सत्त्वादिगुणसन्ततेर्जायन्त इत्येवं प्रतिपादितम्—

**तद्भेदाः काममितरे हास्याद्या अप्यनेकशः ।**
**सत्त्वादिगुणसन्तानाज्जायन्ते परमात्मनः ॥**[3]

उभयोरनयोः पुराणयोः शृङ्गारादिरसानां लक्षणानि तु नोपलभ्यन्ते परं तत्तद्रसविशेषैः सम्बद्धानां स्थायिभावानां लक्षणान्यत्र दृश्यन्ते । एभिर्लक्षणै रसानां स्वरूपं स्फुटीभवति । अस्मात् प्रत्येकं रसस्य वर्णनावसरे तत्सम्बद्धस्थायिभावोऽप्यत्रालोचितः अनन्तरञ्च विष्णुमार्कण्डेयभागवतपुराणेभ्यस्तस्योदाहरणानि प्रस्तुतानि । एषु त्रिषु पुराणेषु भक्तिरसस्यापि प्राचुर्येण समावेशस्तस्मादस्य रसस्य विषयेऽप्यत्र विचारो विहितः ।

---

१. Prajñā, V. S. Agrawala (Banaras Hindu University Journal), Part III, 1959 (शङ्करदेव अवतरे; साधारणीकरण पर संस्कृत और हिन्दी के आचार्य)

२. अग्निपु० ३३९, ८-९; विष्णुधपु० ३, ३०, १

३. अग्निपु० ३३९, ५-६

## १. शृङ्गारः

अस्य स्थायिभावस्य रतिरिति नाम । अग्निपुराणेऽस्या इदं लक्षणम्—

**मनोऽनुकूलेनुभवः सुखस्य रतिरिष्यते ।।[1]**

अभीष्टेऽर्थे प्राप्ते सति सुखस्य या साक्षात्प्रतीतिः सैव रतिरित्युच्यते । विष्णुधर्मोत्तरपुराणस्य सरस्वतीकण्ठाभरणस्य च रतिलक्षणे अग्निपुराणोक्तलक्षणेन सह भृशं संवदतः ।[2] भागवतपुराणेऽस्य रसस्यातिप्राचुर्येण प्रयोगः । विष्णुमार्कण्डेयपुराणयोश्चैष रसो यत्र तत्रोपलभ्यते ।

अग्निपुराणे शृङ्गाररस एवं व्याख्यातः —

**सम्भोगो विप्रलम्भश्च शृङ्गारो द्विविधः स्मृतः ।**
**प्रच्छन्नश्च प्रकाशश्च तावपि द्विविधौ पुनः ।।**
**विप्रलम्भाभिधानो यः शृङ्गारः स चतुर्विधः ।**
**पूर्वानुरागमानाख्यः प्रवासकरुणात्मकः ।।**
**एतेभ्योऽन्यतरं जायमानं सम्भोगलक्षणम् ।**
**विवर्तते चतुर्धेव न च प्रागतिवर्तते ।**
**स्त्रीपुंसयोस्तद्वदयं निर्वर्तिका रतिः ।**
**निखिलाः सात्त्विकास्तत्र वैवर्ण्यप्रलयौ विना ।।**
**धर्मार्थकाममोक्षैश्च शृङ्गार उपचीयते ।**
**आलम्बनविशेषैश्च तद्विशेषैर्निरन्तरः ।।[3]**

शृङ्गाररसस्य सम्भोगविप्रलम्भनामानौ द्वौ भेदौ । अनयोः प्रत्येकं भेदस्य प्रच्छन्नप्रकाशाख्यौ द्वावन्यौ प्रकारौ। विप्रलम्भसञ्ज्ञस्य शृङ्गारस्येमे चत्वारो भेदाः — १. पूर्वानुरागः २. मानः ३. प्रवासः ४. करुणश्च । सम्भोगशृङ्गारस्यापि भवन्ति पूर्वरागमानप्रवासकरुणाख्याश्चत्वारो भेदाः । स्त्रीपुरुषयो रतिभावोऽस्य रसस्य निष्पादयिता । अस्मिन् वैवर्ण्यप्रलयसञ्ज्ञौ सात्त्विकभावौ न प्रयुज्येते परमन्ये सर्वे सात्त्विका भावा अत्रावतिष्ठन्ते । धर्मार्थकाममोक्षाणां सीता रामाद्यालम्बनविशेषाणां च वर्णनैरेष शृङ्गारो रसः पुष्टिं नेनीयते ।

---

१. अग्निपु० ३३९, १३

२. (कः) इष्टार्थविषयप्राप्तौ सुखस्य रतिरिष्यते ।। विष्णुधपु० ३, ३१, ३

(खः) मनोऽनुकूलेष्वर्थेषु सुखसंवेदनं रतिः ।। सरस्वतीक० ५, १३८

३. अग्निपु० ३४२, ४-८

अग्निविष्णुधर्मोत्तरपुराणयोः सम्भोगविप्रलम्भाख्यौ श्रृङ्गाररसस्येमौ भेदौ न सम्यग् व्याख्यातौ। सरस्वतीकण्ठाभरणेऽनयोः स्वरूपमेवं विशदीकृतम्—

**१. सम्भोगश्रृङ्गारः**—अथ सम्भोगः। तत्र नायकयोः प्रागसङ्गतयोः सङ्गतवियुक्तयोर्वा मिथः समागमे प्रागुत्पन्नस्तदानीन्तनो वा रत्याख्यः स्थायिभावोऽभिलषणीयालिङ्गनादीनामवाप्तौ सत्यां समुपजायमानैर्हर्षधृतिस्मृतिमतिप्रभृतिभिर्व्यभिचारिभावैः संसृज्यमान ऋतूद्यानोपगमजलक्रीडापर्वतोपदेशप्रसाधनगृहमधुपानेन्दूदयादिभिरुद्दीपनविभावैरुद्दीप्यमानः, सविभ्रमभ्रूकटाक्षविक्षेपालापसम्भ्रमस्मितादिभिरनुभावैरभिव्यज्यमान ईप्सितमासादयन्, जिहासितं वा जिहानः प्राप्तप्राप्यप्रकर्षारम्भः सम्भोगश्रृङ्गाराख्यां लभते। स चतुर्धा प्रथमानुरागानन्तरः, मानानन्तरः, प्रवासनन्तरः, करुणानन्तर इति।[1]

**२. विप्रलम्भश्रृङ्गारः**— तत्र नायकयोः प्रागसङ्गतयोः सङ्गतयोश्च सङ्गतवियुक्तयोर्वा मिथोदर्शनश्रवणाभ्यामवस्थिताभिमानजन्मा परस्परानुरागोऽन्यतरानुरागो वाभिलषणीयालिङ्गनादीनामनवाप्तौ सत्यां समुपजायमानैस्तैस्तैरुत्कण्ठादिभिर्व्यभिचारिभावैर्मनोवाग्बुद्धिशरीरारम्भजन्मभिश्चानुभावैरनुबद्धः प्राप्तप्राप्यप्रकर्षावस्थो विप्रलम्भश्रृङ्गाराख्यां लभते। स चतुर्धा—पूर्वानुरागो, मानः, प्रवासः करुणश्च।[2]

**१. पूर्वरागानन्तरः सम्भोगः** — विष्णुपुराणे गोपीभिः सार्धं विहरतो भगवतः कृष्णस्य रासलीलाया वर्णनम्—

> **परिवृत्तिश्रमेणैका चलद्वलयलापिनीम्।**
> **ददौ बाहुलतां स्कन्धे गोपी मधुनिघातिनः॥**
> **काचित्प्रविलसद्बाहुः परिरभ्य चुचुम्ब तम्।**
> **गोपी गीतस्तुतिव्याजान्निपुणा मधुसूदनम्॥**[3]

अत्र सङ्गतवियुक्तानां गोपीनां भगवति कृष्णे संस्काररूपेण विद्यमानो रत्याख्यः स्थायिभावोऽभिलषणीयस्पर्शनचुम्बनयोरवाप्तौ सत्यां समुपजायमानैः स्वसम्बद्धव्यभिचारिभावैः पुष्टिङ्गतः सन् सम्भोगश्रृङ्गारतां भजते।

भागवतपुराणस्याग्नीध्रचरिते पूर्वचित्तिमप्सरसं प्रत्याग्नीध्रस्य नृपतेरियमुक्तिः —

---

१. सरस्वतीक० ५, १६९ गद्यभागः

२. तत्रैव

३. विष्णुधपु० ५, १३, ५३-५४

का त्वं चिकीर्षसि च किं मुनिवर्य शैले
मायासि कापि भगवत्परदेवतायाः ।
विज्ये बिभर्षि धनुषी सुहृदात्मनोऽर्थे
किं वा मृगान्मृगयसे विपिने प्रमत्तान् ॥
लोकं प्रदर्शय सुहृत्तम तावकं मे
यत्रत्य इत्थमुरसावयवावपूर्वौ ।
अस्मद्विधस्य मन उन्नयनौ बिभर्त्ति
बह्वद्भुतं सरसरासुधादि वक्त्रे ॥[1]

अत्राग्नीध्रस्य नृपस्य प्रागसङ्गतायां पूर्वचित्तावप्सरसि प्रथमदर्शनसमय एवोत्पन्नो रत्याख्यः स्थायिभावः स्वसम्बद्धव्यभिचारिभावैः पुष्टिमवाप्य शृङ्गार-रसाभिधां लभते ।

२. **मानानन्तरः सम्भोगः** — भागवतपुराणस्य पुरञ्जनोपाख्याने पुरञ्जनो मानिनीं स्वप्रेयसीमनुनयति । अनन्तरं चासौ परितुष्टया प्रीतया च तया सार्धं रमते—

अनुनिन्येऽथ शनकैर्वीरोऽनुनयकोविदः ।
पस्पर्श पादयुगलमाह चोत्सङ्गलालिताम् ॥

सा त्वं मुखं सुदति सुभ्र्वनुरागमार-
व्रीडाविलम्बविलसद्धसितावलोकम् ।
नीलालकालिभिरुपस्कृतमुन्नसं नः
स्वानां प्रदर्शय मनस्विनि वल्गुवाक्यम् ॥

सा राजा महिषीं राजन् सुस्नातां रुचिराननाम् ।
कृतस्वस्त्ययनां तृप्तामभ्यनन्ददुपागताम् ॥[2]

अत्र प्रणयकुपितायां स्वप्रेयस्यां प्रीतायां सत्यां मिथोऽनुरागजननानन्तरं पुरञ्जनस्य तद्भार्यायाश्च हृदयनिष्ठो रतिसञ्ज्ञः स्थायिभावः परस्परदर्शनस्पर्शनादिक्रियाभिरानन्दस्यावाप्तौ सत्यां तत्तद्व्यभिचारिभावैः पुष्टिङ्गतः सन् शृङ्गार-रसतामाप्नोति ।

३. **प्रवासानन्तरः सम्भोगः** —भागवतपुराणस्य रासलीलाप्रसङ्गे शरन्निशायां चन्द्रोदयवर्णनम्—

---

१. भागवतपु० ५, २, ७; १२
२. तत्रैव ४, २६, २०; २३, तत्रैव ४, २७, २

तदोडुराजः ककुभः करैर्मुखं
प्राच्या विलिम्पन्नरुणेन शन्तमैः ।
स चर्षणीनामुदगाच्छुचो मृजन्
प्रियः प्रियाया इव दीर्घदर्शनः ॥[1]

अत्र प्रवासानन्तरमुपागतस्य नायकस्येव चन्द्रमसो नायिकारूपिण्या प्राच्या सह संयोगे जाते पारस्परिकदर्शनस्पर्शनादिचेष्टाभिरानन्दस्योपलब्धौ जातायां तयोर्हृदयनिष्ठो रत्याख्यः स्थायिभावो हर्षादिभिर्व्यभिचारिभिः पुष्टिं प्राप्यमाणः शृङ्गाररसतां याति ।

**४. करुणानन्तरः सम्भोगः** —मार्कण्डेयपुराणस्य मदालसावियोगप्रसङ्गे राजपुत्र ऋतध्वजो मृतां मदालसाख्यां स्वपत्नीं पुनः स्वसम्मुखजीवितां विलोक्य तामुपयाति—

स दृष्ट्वा तां तदा तन्वीं तत्क्षणाद्विगतत्रपः ।
प्रियेति तामभिमुखं ययौ वाचमुदीरयन् ॥[2]

अत्र मृतां स्वपत्नीं पुनर्जीवितां विलोक्य स्वप्रियाया दर्शनेनानन्दस्यावाप्तौ सत्यामृतध्वजस्य रतिस्थायिभाव औत्सुक्यादिव्यभिचारिभावैः पुष्टः सन् शृङ्गाररसतां लभते ।

**५. पूर्वानुरागविप्रलम्भः** —भागवतपुराणे बाणासुरस्योषाभिधाना पुत्री कुमारमनिरुद्धं प्रति प्रीतौ समुत्पन्नायां स्वसखीमभिदधाति—

दृष्टः कश्चिन्नरः स्वप्ने श्यामः कमललोचनः ।
पीतवासा बृहद्बाहुर्योषितां हृदयङ्गमः ॥
तमहं मृगये कान्तं पाययित्वाधरं मधु ।
क्वापि यातः स्पृहयतीं क्षिप्त्वा मां वृजिनार्णवे ॥[3]

अत्र स्वप्नदृष्टमनिरुद्धं प्रत्यनुरक्तायाः प्रागसङ्गताया ऊषाया हृदयनिष्ठो रत्याख्यः स्थायिभावोऽभिलषणीयालिङ्गनादीनामनवाप्तौ सत्यां समुपजायमानैस्तैस्तैरुत्कण्ठादिभिर्व्यभिचारिभावैः प्रकर्षावस्थां प्राप्य पूर्वानुरागविप्रलम्भशृङ्गाररसरूपमुपयाति ।

---

१. भागवतपु० १०, २९, २

२. मार्कण्डेयपु० २२, ३७

३. भागवतपु० १०, ६२, १७

६. **मानविप्रलम्भः** — विष्णुपुराणस्य रासलीलाप्रकरणे काचिद् गोपिकाऽपरस्याः कस्याश्चिद्गोपिकायाः कृष्णस्य च पारस्परिकमानं वर्णयति—

**पुष्पबन्धनसम्मानकृतमानामपास्य ताम् ।**
**नन्दगोपसुतो यातो मार्गेणानेन पश्यत ॥**[1]

अत्र कृतमानयोरसङ्गतयोश्च गोपीकृष्णयोर्हृन्निष्ठो रतिस्थायिभावोऽभिलषणीयालिङ्गनादीनामनवाप्तौ सत्यां समुपजायमानैस्तैस्तैरुत्कण्ठादिभिर्व्यभिचारिभावैः प्रकर्षावस्थां प्राप्य मानविप्रलम्भश्रृङ्गाररसरूपतां प्राप्नोति ।

(पुष्पबन्धनसम्मानकृतमानाम्—पुष्पबन्धनस्य यत्सम्मानं तदवाप्तौ कृतं मानं यया सा तामित्यर्थः ।)

७. **प्रवासविप्रलम्भः** —भागवतपुराणे व्रजं प्रति यास्यन्तमुद्धवं दूरस्थः कृष्णः प्रवासदुःखेन सन्तप्तानां गोपिकानां विरहदशां वर्णयति—

**मयि ताः प्रेयसां प्रेष्ठे दूरस्थे गोकुलस्त्रियः ।**
**स्मरन्त्योऽङ्ग विमुह्यन्ति विरहौत्कण्ठ्यविह्वलाः ॥**
**धारयन्त्यतिकृच्छ्रेण प्रायः प्राणान् कथञ्चन ।**
**प्रत्यागमनसन्देशैर्बल्लव्यो मे मदात्मिकाः ॥**[2]

अत्र प्रवासजन्यविरहवेदनाविधुराणां गोपिकानां हृन्निष्ठो रतिभावोऽभिलषणीयालिङ्गनादीनामनुपलब्धौ सत्यां प्रादुर्भूयमानैस्तत्तदुत्कण्ठादिभिर्व्यभिचारिभावैः प्रकर्षतामवाप्य प्रवासविप्रलम्भश्रृङ्गाररसरूपतामुपगच्छति ।

८. **करुणविप्रलम्भः** —मार्कण्डेयपुराणे मदालसाया विरहेण सन्तप्तस्यर्तध्वजस्येयमुक्तिः—

**चिन्तयामास सा बाला मां श्रुत्वा निधनङ्गतम् ॥**
**तत्याज जीवितं साध्वी धिङ् मां निष्ठुरमानसम् ।**
**नृशंसोऽहमनार्योऽहं विना तां मृगलोचनाम् ॥**
**मत्कृते निधनं प्राप्तां यज्जीवाम्यतिनिर्घृणः ।**[3]

---

१. विष्णुपु० ५, १३, ३६
२. भागवतपु० १०, ४६, ५-६
३. मार्कण्डेयपु० २१, १०-१२

अत्र स्वपत्न्यां मदालसायां मृतायां सत्यां सङ्गतवियुक्तस्यर्तध्वजस्य हृदयनिष्ठो रतिस्थायिभावोऽभिलषणीयदर्शनादीनामप्राप्तौ सत्यां समुपजायमानैर्निर्वेदादिभिर्व्यभिचारिभावैः प्रकर्षावस्थां नेनीयमानः करुणविप्रलम्भश्रृङ्गारसतां भजते ।

विष्णुधर्मोत्तरपुराणे विप्रलम्भश्रृङ्गारान्तर्गताः कामस्येमा दश दशा अपि वर्णिताः —

**विप्रलम्भे तु निर्दिष्टाः कामावस्थास्तथा दश ।**
**चक्षुः प्रीतिर्विनिर्दिष्टा प्रथमायां नराधिप ॥**
**मनसश्च तथा सङ्गो द्वितीयायां प्रकीर्तितः ।**
**स्मरणं च तथा प्रोक्तं तृतीयायां निरन्तरम् ॥**
**निद्राभेदश्चतुर्थ्यां तु पञ्चम्यां तनुता तथा ।**
**व्यावृत्तिर्विषयेभ्यस्तु षष्ठ्यां प्रोक्ता नराधिप ॥**
**लज्जाप्रणाशः सप्तम्यामुन्मादस्तदनन्तरम् ।**
**नवम्यां तु तथा मूर्च्छा दशम्यां मरणं भवेत् ॥**[१]

एवमस्मिन् पुराणे कामस्य या दश दशाः प्रोक्तास्तासां स्वरूपमुदाहरणानि चात्र प्रस्तूयन्ते—

१. **चक्षुःप्रीतिः** — यदा प्रथमदर्शनावसरेऽन्योन्यस्य नयनसंयोगानन्तरं नायकनायिकयोश्चेतस्यनुरागो जायते परं तौ स्वाभिलषणीयमवाप्तुमसमर्थौ तदैषाऽवस्था चक्षुःप्रीतिर्नयनानुरागो वेत्युच्यते ।

भागवतपुराणस्य सुभद्राहरणप्रसङ्गेऽर्जुनस्य सुभद्रायाश्च नयनानुरागस्य वर्णनम्—

**सोऽपश्यत्तत्र महतीं कन्यां वीरमनोहराम् ।**
**प्रीत्युत्फुल्लेक्षणस्तस्यां भावक्षुब्धं मनो दधे ॥**
**सापि तं चकमे वीक्ष्य नारीणां हृदयङ्गमम् ।**
**हसन्ती व्रीडितापाङ्गी तन्न्यस्तहृदयेक्षणा ॥**[२]

अत्रार्जुनस्य सुभद्रायाश्च प्रथमदर्शनावसरे नयनसंयोगानन्तरमेव प्रीतेः समुत्पन्नत्वादभीष्टस्याप्राप्तेश्च चक्षुःप्रीतिनाम्नी विप्रलम्भश्रृङ्गारस्य प्रथमावस्था ।

२. **मनःसङ्गः** —यदाऽनुरागजननानन्तरमभीष्टस्य प्राप्तये मनस्यभिलाष

---

१. विष्णुधपु० ३, ३०, १७-२०
२. भागवतपु० १०, ८६, ६-७

आसक्तिर्वा जायते तदैषा दशा मनःसङ्ग इत्युच्यते।

भागवतपुराणे सुभद्राहरणप्रसङ्गेऽर्जुनस्य चित्तानुरक्तेरेवंविधा वर्णना—

**तां परं समनुध्यायन्नन्तरं प्रेप्सुरर्जुनः ।**
**न लेभे शं भ्रमच्चित्तः कामेनातिबलीयसा ।।**[1]

अत्र सुभद्रायामर्जुनस्य मनः सन्निवेशदर्शनात्तस्याश्चानवाप्तौ सत्यां मनःसङ्गाभिधा विप्रलम्भश्रृङ्गारे कामस्य द्वितीयावस्था ।

अपि च मार्कण्डेयपुराणस्य पतिव्रतामाहात्म्यप्रसङ्गे वेश्यानुरक्तो ब्राह्मणः स्वपत्नीं कथयति—

**तां मे प्रापय धर्मज्ञे सैव मे हृदि वर्तते ।**
**दृष्टा सूर्योदये बाला रात्रिश्चेयमुपागता ।।**
**दर्शनानन्तरं सा मे हृदयान्नापसर्पति ।।**[2]

अत्रापि ब्राह्मणस्य मनसि वेश्यां प्रत्यासक्तेर्वर्णनान्मनःसङ्गाभिधा विप्रलम्भश्रृङ्गारे कामस्य द्वितीयावस्था ।

**३. स्मरणम्**—यदा लौकिककर्माण्युत्सृज्य नायकनायिकयोर्हृदि निरन्तरमिष्टस्यैव चिन्तनं तदवाप्तेश्चाभिलाषो जायेते तदा सा दशा स्मरणमिति कथ्यते ।

भागवतपुराणे वियोगस्याशङ्कयैव सन्त्रस्ताः कृष्णपत्न्यश्चक्रवाकीं प्रति कथयन्ति —

**नेत्रे निमीलयसि नक्तमदृष्टबन्धु-**
**स्त्वं रोरवीषि करुणं बत चक्रवाकि ।**
**दास्यं गता वयमिवाच्युतपादजुष्टां**
**किं वा स्रजं स्पृहयसे कबरेण वोढुम् ।।**[3]

अत्र चक्रवाक्याः कृष्णपत्नीनां चेष्टचिन्तनस्य तदवाप्तेश्च वर्णनात्स्मरणाभिधा कामस्य तृतीयावस्था ।

**४. निद्राभेदः**—निद्रानाश एव निद्राभेदः इत्युच्यते ।

---

१. भागवतपु० १०, ८६, ८
२. मार्कण्डेयपु० १६, २१-२२
३. भागवतपु० १०, ९०, १६

भागवतपुराणे वियोगजन्यवेदनाकष्टविदां कृष्णपत्नीनां कुररीं प्रत्येषोक्तिः —

कुररि विलपसि त्वं वीतनिद्रा न शेषे
स्वपिति जगति रात्र्यामीश्वरो गुप्तबोधः ।
वयमिव सखि कच्चिद् गाढनिर्भिन्नचेता
नलिननयनहासोदारलीलेक्षितेन ॥[1]

अत्र कुर्याः कृष्णपत्नीनां च निद्राया भङ्गस्य वर्णनप्रसङ्गात् कामस्य निद्राभेदाख्या चतुर्थ्यवस्था ।

अपि च भागवतपुराणे वैदर्भ्या रुक्मिण्याः सन्देशं निशम्य कृष्णो ब्राह्मणं कथयति—

तथाहमपि तच्चित्तो निद्रां च न लभे निशि ।
वेदाहं रुक्मिणा द्वेषान्ममोद्वाहो निवारितः ॥[2]

अत्रापि पूर्वोक्तैवावस्था प्रदर्शिता ।

५. **तनुता**—वियोगजन्यं देहदौर्बल्यमेव तनुतेत्युच्यते । भागवतपुराणे कृष्णपत्न्यः समुद्रपत्नीर्नदीः प्रति कथयन्ति —

शुष्यद्ध्रदाः कर्शिता बत सिन्धुपत्न्यः
सम्प्रत्यपास्तकमलश्रिय इष्टभर्तुः ।
यद्वद् वयं मधुपतेः प्रणयावलोक-
मप्राप्य मुष्टहृदयाः पुरुकर्शिताः स्म ॥[3]

अत्र वियोगविधुराणां कृष्णपत्नीनां समुद्रपत्नीनां नदीनां च गात्राणां कृशताया वर्णनात्तनुताभिधाना कामस्य पञ्चम्यवस्था ।

६. **विषयेभ्यो व्यावृत्तिः**—यदा वियोगेन मनो भृशमुत्तपते तदाऽशेषा वृत्तयो विषयेभ्योऽपसृत्येष्टचिन्तनपरा जायन्ते ।

भागवतपुराणे कृष्णो मथुरां यास्यतीति वृत्तान्तश्रवणानन्तरं भाविविरहेण संतप्तानां गोपीनां दशाया वर्णनम्—

---

१. भागवतपु० १०, ९०, १५
२. तत्रैव १०, ५३, २
३. तत्रैव १०, ९०, २३

अन्याश्च तदनुध्याननिवृत्ताशेषवृत्तयः ।
नाभ्यजानन्निमं लोकमात्मलोकं गता इव ॥[1]

अत्र गोपीनां विषयव्यावृत्तेर्वर्णितत्वाद् विषयव्यावृत्तिरिति नाम्नी कामस्य षष्ठ्यवस्था।

**७. लज्जाप्रणाशः**—यदा विरहविधुरो जनो वेदनातिरेकाद् गुरुजनानां समक्षमेवेष्टस्य नामोच्चारणस्मरणादौ तत्परो जायते तदा लज्जाप्रणाश इति नाम्नी दशा ।

विष्णुपुराणे कृष्णस्य मथुरागमनावसरे तं गमनान्निवारयितुकामा काचिद् गोपी स्वसखीं कथयति—

गुरूणामग्रतो वक्तुं किं ब्रवीषि न नः क्षमम् ।
गुरवः किं करिष्यन्ति दग्धानां विरहाग्निना ॥[2]

अत्र गुरूणां समक्षं त्रपाभङ्गस्य वर्णितत्वाल्लज्जाप्रणाशाभिधा कामस्य सप्तम्यवस्था ।

भागवतपुराणेऽप्येतादृश एव प्रसङ्गे भविष्यद्विरहविह्वलानां गोपिकानां लज्जानाशसूचिकेयमुक्तिः —

निवारयामः समुपेत्य माधवं
किं नोऽकरिष्यन् कुलवृद्धबान्धवाः ।
मुकुन्दसङ्गान्निमिषार्धदुस्त्यजाद्
दैवेन विध्वंसितदीनचेतसाम् ॥[3]

**८. उन्मादः**—कामेन शोकेन च चित्तसम्मोह उन्माद इति कथ्यते । अस्यां दशायां निष्प्रयोजनं प्रलापो वा हासो वा रोदनं वा भ्रमणं वा दृश्यते ।

भागवतपुराणे सङ्गतवियुक्तानां गोपीनामियमुक्तिः —

चूतप्रियालपनसासनकोविदार-
जम्ब्वर्कबिल्वबकुलाम्रकदम्बनीपाः ।
येऽन्ये परार्थभवका यमुनोपकूलाः
शंसन्तु कृष्णपदवीं रहितात्मनां नः ॥[4]

---

१. भागवतपु० १०, ३९, १५
२. विष्णुपु० ५, १८, २२
३. भागवतपु० १०, ३९, २८
४. तत्रैव १०, ३०, ९

अत्र रसालादीन् वृक्षानभिलक्ष्य चित्तसम्मोहाद् वचांस्यभिहितानि । एतेषां वचसामस्थाने प्रयुक्तत्वादुन्मत्तप्रलाप इव निष्फलत्वाच्चैषा कामस्योन्मादाभिधाऽष्टमी दशा ।

९. **मूर्च्छा**—विरहजन्यदुःखातिरेकात्समुत्पन्नो मोह एव मूर्च्छा । भागवतपुराणे कृष्णविरहं सोढुमसमर्थाया गोप्या इदं वर्णनम्—

**हा नाथ रमण प्रेष्ठ क्वासि क्वासि महाभुज ।**
**दास्यास्ते कृपणाया मे सखे दर्शय सन्निधिम् ॥**
**अन्विच्छन्त्यो भगवतो मार्गं गोप्यो विदूरतः ।**
**ददृशुः प्रियविश्लेषमोहितां दुःखितां सखीम् ॥**[1]

अत्र मोहमुपगताया गोप्या मूर्च्छाख्या कामस्य नवमी दशा विद्यते ।

१०. **मरणम्**—यत्र प्रत्यासन्नस्य चेतसाऽभिलषितस्य वा मृत्योर्वर्णनं तत्र मरणमितिनाम्नी दशमी दशा ।

भागवतपुराणे कृष्णेन सहोद्वाहस्य कृते कृतसङ्कल्पाया रुक्मिण्या अयं सन्देशः —

**यस्याङ्घ्रिपङ्कजरजः स्नपनं महान्तो**
**वाञ्छन्त्युमापतिरिवात्मतमोऽपहत्यै ।**
**यर्ह्यम्बुजाक्ष न लभेय भवत्प्रसादं**
**जह्यामसून् व्रतकृशाञ्छतजन्मभिः स्यात् ॥**[2]

अत्र रुक्मिण्या मरणनिश्चयसंसूचनात्कामस्य मरणाख्या दशमी दशा ।

## २. हास्यरसः

अस्य स्थायिभावस्य हास इति नाम । अग्निपुराणेऽस्येदं लक्षणम्—

**हर्षादिभिश्च मनसो विकासो हास उच्यते ॥**[3]

हर्षप्रभृतिभिश्चेतसो विकास एव हासः । विष्णुधर्मोत्तरपुराणे हासस्य

---

१. भागवतपु० १०, ३०, ४०-४१

२. तत्रैव १०, ५२, ४३

३. अग्निपु० ३३९, १४

स्वरूपं न सम्यक् प्रतिपादितं तत्र तु परचेष्टानुकृतिरेव हासकारणमिति प्रोक्तम् ।[1] सरस्वतीकण्ठाभरणस्य लक्षणमग्निपुराणलक्षणेन सह सङ्गच्छते ।[2] विष्णु-मार्कण्डेयभागवतेषु त्रिष्वेव पुराणेषु रसस्यास्य नितरामभावात् क्वचिदेवा-परिपुष्टदशायामस्य निदर्शनं दृष्टिपथं समायाति ।

अग्निपुराणे हसनप्रकारानवलम्ब्य हासस्य चत्वारो भेदा वर्णिताः —

**हासश्चतुर्विधो लक्ष्यदन्तः स्मित इतीरितः ।**
**किञ्चिल्लक्षितदन्ताग्रं हसितं फुल्ललोचनम् ।।**
**विहसितं सस्वनं स्याज्जिह्मोपहसितं तु तत् ।।**
**सशब्दं पापहसितमशब्दमतिहासितम् ।।**[3]

हासो हि चतुर्धा । यस्मिन् दन्ता न लक्ष्यन्ते स स्मित इत्युदीर्यते, यत्र दन्तानामग्राणि किञ्चिद् दृश्यन्ते नेत्राणि च विकासं यान्ति तद्धसित-मित्युच्यते । विहसिताख्ये हास्ये मधुरः शब्दोऽपि जायते । जिह्मोपहसितम् (कुटिलहासः) च द्विविधम् — १. पापहसितम् २. अतिहासितं च । पापहसिते तारस्वनः श्रूयते परमतिहासितं निःस्वनं भवति । जिह्महसिताख्ये हासे तावदु-पहासार्थं दुर्भावनायाः संश्लेषोऽपि जायते ।

परं हासस्येमे भेदा अवस्थाविशेषा एव द्योतयन्ति न तु हास्यरसस्य भेदान् । वस्तुतो हास्यरसस्य सृष्टिरसम्बद्धवेषधारणेनासम्बद्धप्रलापादिभिश्च जायते । कारणभेदानाश्रित्यास्य रसस्यानेके भेदाः स्युः । संस्कृतवाङ्मयस्य ग्रन्थेष्वस्य रसस्याल्पीयान् प्रयोगः । प्रायशो नाटकेषु विदूषक एव हास्यरसं प्रस्तौति । अन्येषां रसानां तु काव्यशास्त्रग्रन्थेषु दृश्यन्तेऽनेके भेदाः परमस्य भेदा न सम्यङ् निरूपिताः ।

भागवतपुराणे यदुवंशोद्भवा राजपुत्राः साम्बं स्त्रीवेषैर्वेषयित्वा महर्षी-नुपगम्य च कथयन्ति—

**क्रीडन्तस्तानुपव्रज्य कुमारा यदुनन्दनाः ।**
**उपसङ्गृह्य पप्रच्छुरविनीता विनीतवत् ।।**
**ते वेषयित्वा स्त्रीवेषैः साम्बं जाम्बवतीसुतम् ।**
**एषा पृच्छति वो विप्रा अन्तर्वत्न्यसितेक्षणा ।।**

---

१. परचेष्टानुकरणाद्धास्यमुपजायते । विष्णुधपु० ३, ३१, २
२. न्यङ्गव्रीडादिभिश्चेतोविकारो हास उच्यते । सरस्वतीक० ५, १३६
३. अग्निपु० ३४२, ६-११

**प्रष्टुं विलज्जती साक्षात् प्रब्रूतामोघदर्शनाः ।**
**प्रसोष्यन्ती पुत्रकामा किंस्वित् सञ्जनयिष्यति ॥[1]**

अत्र मुनिवरान् वञ्चयितुमनसोऽविनीताः सन्तोऽप्यात्मानं विनीता इव प्रदर्शयन्तः स्वाकारगोपनपराश्च यदुनन्दनाः स्त्रीवेषधारिणः पुरुषभूतस्य साम्बस्य कृते'ऽन्तर्वत्न्यसितेक्षणा प्रष्टुं विलज्जती प्रसोष्यन्ती पुत्रकामा' चेति हासगर्भितानि विशेषणानि प्रयुञ्जते । एवमेतेषां राजपुत्राणां हृदये वर्तमानो हासः स्थायिभावो हर्षावहित्थादिभिर्व्यभिचारिभावैः पुष्टिं नेनीयमानो हास्यरसतां याति ।

## ३. करुणरसः

शोकोऽस्य रसस्य स्थायिभावः । अग्निपुराणे शोकस्येदं लक्षणम्—

**मनोवैक्लव्यमिच्छन्ति शोकमिष्टक्षयादिभिः ॥[2]**

प्रियस्य विनाशादिभिश्चित्तविक्षेपः शोक इत्युच्यते । विष्णुधर्मोत्तर-पुराणस्य सरस्वतीकण्ठाभरणस्य च लक्षणे अग्निपुराणलक्षणेन सह संवदतः ।[3] एष रसस्त्रिष्वेव पुराणेषूपलभ्यते परं भागवतपुराणेऽस्य भूयान् प्रयोगः । अग्नि-पुराणेऽस्य भेदा एवं प्रोक्ताः —

**यश्चासौ करुणो नाम स रसस्त्रिविधो भवेत् ।**
**धर्मोपघातजश्चित्तविलासजनितस्तथा ।**
**शोकः शोकाद् भवेत्……।[4]**

त्रिविधोऽयं करुणो रसः — १. धर्मोपघातजः — एष धर्मस्य हानौ सत्यां जायते २. चित्तविलासजः — अयं चित्तग्लानौ सत्यामुत्पद्यते ३. शोकजः — एष चेष्टवियोगजाच्छोकात्प्रादुर्भवति ।

१. **धर्मोपघातजः** — भागवतपुराणे शमीकस्य कण्ठे मृतं सर्पं निक्षिप्य स्वगृहं प्रत्यावृत्तः परीक्षिन्नृपः शोकातुरो जायते—

**महीपतिस्त्वथ तत्कर्म गर्ह्यं**
**विचिन्तयन्नात्मकृतं सुदुर्मनाः ।**

---

१. भागवतपु० ११, १, ११-१४

२. अग्निपु० ३३९, १४

३. (कः) इष्टबन्धुवियोगेन घननार्शेन पार्थिव ।
शोको भवति…॥ विष्णुपु० ३, ३१, ४
(खः) शोकाश्चित्तस्य वैधुर्यमभीष्टविरहादिभिः ॥ सरस्वतीक० ५, १३

४. अग्निपु० ३४२, ११-१२

अहो मया नीचमनार्यवत्कृतं
निरागसि ब्रह्मणि गूढतेजसि ॥
अद्यैव राज्यं बलमृद्धकोशं
प्रकोपितब्रह्मकुलानलो मे ।
दहत्वभद्रस्य पुनर्न मेऽभूत्
पापीयसी धीर्द्विजदेवगोभ्यः ॥[1]

अत्रालम्बनविभावभूतस्य शमीकस्य महर्षेरवमानादुत्पन्नो नृपतेः परीक्षितो हृन्निष्ठो शोकाख्यः स्थायिभावो निर्वेदग्लान्यादिभिर्व्यभिचारिभावैः पुष्टः सन् धर्मोपघातजकरुणरसाभिख्यां लभते ।

२. **चित्तविलासजः** — भागवतपुराणेऽजामिलस्य चेतसि सञ्जायमानस्यानुतापस्य वर्णनम्—

अहो मे परमं कष्टमभूदविजितात्मनः ।
येन विप्लावितं ब्रह्म वृषल्यां जायताऽऽत्मना ॥
धिङ् मां विगर्हितं सद्भिर्दुष्कृतं कुलकज्जलम् ।
हित्वा बालां सतीं योऽहं सुरापामसतीमगाम् ॥[2]

अत्रालम्बनविभावभूतस्वपत्नीत्यागादुत्पन्नोऽजामिलस्य शोकस्थायिभावो निर्वेदग्लान्यादिभिर्व्यभिचारिभावैः पुष्टिङ्गतश्चित्तविलासजकरुणरसाभिधां याति ।

विष्णुपुराणे जराभिधो व्याधः कृष्णस्योपरि बाणप्रक्षेपानन्तरं तमुपगम्य परिदेवयन्नभिदधाति—

अजानता कृतमिदं मया हरिणशङ्कया ।
क्षम्यतां मम पापेन दग्धं मां त्रातुमर्हसि ॥[3]

अत्रालम्बनविभावभूतबाणाहतकृष्णादुत्पन्नो व्याधस्य शोकस्थायिभावः स्वसम्बद्धग्लान्यादिभिर्व्यभिचारिभावैर्वृद्धिङ्गतः संश्चित्तविलासजकरुणरसरूपतामुपयाति ।

३. **शोकजः ( वियोगजः )** — कृष्णतिरोभावनन्तरमाभीरैः पराजितः

---

१. भागवतपु० १, १९, १; ३

२. तत्रैव ६, २, २६-२७

३. विष्णुपु० ५, ३७, ७२

सन्नर्जुनो युधिष्ठिरमेवं ब्रवीति—

**वञ्चितोऽहं महाराज हरिणा बन्धुरूपिणा ।**
**येन मेऽपहृतं तेजो देवविस्मापनं महत् ॥**[1]

अत्रालम्बनविभावभूतलोकान्तरगतात् कृष्णादुत्पन्नोऽर्जुनस्य शोकस्थायिभावस्तैस्तैर्निर्वेदादिभिर्व्यभिचारिभिः पोष्यमाणः शोकजकरुणरसाभिख्यां व्रजति ।

मार्कण्डेयपुराणस्य हरिश्चन्द्रोपाख्याने स्वपुत्रे रोहिते मृते सति नृपतेर्हरिश्चन्द्रस्येयं विलापोक्तिः —

**हा वत्स सुकुमारं ते स्वक्षिभ्रूनासिकालकम् ।**
**पश्यतो मे मुखं दीनं हृदयं किन्न दीर्यते ॥**[2]

अत्रालम्बनविभावभूताद् गतासो रोहितादुत्पन्नस्तत्पितुर्हरिश्चन्द्रस्य शोकस्थायिभावो निर्वेदादिभिर्व्यभिचारिभावैर्वृद्धिङ्गतः सन् शोककरुणरसतामश्नुते ।

## ४. रौद्ररसः

अस्य रसस्य क्रोध इतिनामा स्थायिभावः । अग्निपुराणे क्रोधस्येदं लक्षणम्—

**क्रोधस्तैक्ष्ण्यं प्रबोधश्च प्रतिकूलानुकारिणी ॥**[3]

विपरीतायां परिस्थितौ तीक्ष्णताया जागरूकतायाश्च प्रादुर्भाव एव क्रोध इति कथ्यते । विष्णुधर्मोत्तरपुराणे नास्य लक्षणम् । सरस्वतीकण्ठाभरणस्य लक्षणमग्निपुराणलक्षणेन सह सङ्गच्छते ।[4] एष रसस्त्रिषु पुराणेषु यत्र तत्रावलोक्यते । अग्निपुराणेऽस्य भेदाः स्थायिव्यभिचारिभावाश्चैवं व्याख्याताः —

**अङ्गनेपथ्यवाक्यैश्च रौद्रोऽपि त्रिविधो रसः ।**
**तस्य निर्वर्तकः क्रोधः स्वेदो रोमाञ्चवेपथुः ॥**[5]

---

१. भागवतपु० १, १५, ५

२. मार्कण्डेयपु० ८, १६५

३. अग्निपु० ३३९, १५

४. प्रतिकूलेषु तैक्ष्ण्यस्य प्रबोधः क्रोध उच्यते ॥ सरस्वतीक० ५, १४०

५. अग्निपु० ३४२, १३ (अत्र रोमाञ्चवेपथू इति पाठः शुद्धः स्यात्)

त्रिविधोऽयं रौद्ररसः — १. अङ्गजरौद्रः — एष शरीरावयवानां सञ्चालनस्य प्रकारविशेषेण परिलक्ष्यते २. नैपथ्यजरौद्रः — अयं परिधानेनाभिलक्ष्यते ३. वाक्यजरौद्रः — एष च सामर्षवचनैः प्रतीयते।

१. **अङ्गजरौद्रः** — विष्णुपुराणस्य वृषभासुरवधप्रसङ्गे क्रुध्यतो वृषभरूपधारिणोऽसुरस्य वर्णनम्—

**सतोयतोयदच्छायस्तीक्ष्णशृङ्गोऽर्कलोचनः।**
**खुराग्रपातैरत्यर्थं दारयन्धरणीतलम्॥**
**लेलिहानस्सनिष्पेषं जिह्वयोष्ठौ पुनः पुनः।**
**संरम्भाविद्धलाङ्गूलः कठिनस्कन्धबन्धनः॥**[1]

अत्र कृष्णगोपगोपिकाद्यालम्बनविभावेभ्यः क्रुध्यतो वृषभासुरस्योत्पन्नः क्रोधः स्थायिभावः समुत्पन्नैरसूयाश्रमादिव्यभिचारिभावैः पुष्टिं नेनीयमानोऽङ्गजरौद्ररसतया प्रतीयते।

२. **अङ्गजनैपथ्यजरौद्ररसः** — भागवतपुराणस्य दक्षयज्ञविध्वंसप्रसङ्गे वीरभद्रस्य वर्णनम्—

**ततोऽतिकायस्तनुवा स्पृशन् दिवं**
**सहस्रबाहुर्घनरुक् त्रिसूर्यदृक्।**
**करालदंष्ट्रो ज्वलदग्निमूर्धजः**
**कपालमाली विविधोद्यतायुधः॥**[2]

अत्र सतीप्राणत्यागकारणभूताय दक्षाय प्रकुप्यतो वीरभद्रस्य प्राक्समुत्पन्नः क्रोधस्थायिभावोऽसूयाश्रमादिभिर्व्यभिचारिभावैः पुष्टिङ्गतः सन्नङ्गैर्नैपथ्येन च परिलक्ष्यमानत्वादङ्गजस्य नेपथ्यजस्य चेत्युभयविधस्य रौद्ररसस्याभिख्यां लभते।

३. **वाक्यजरौद्रः** — मार्कण्डेयपुराणस्य हरिश्चन्द्रकथायां विश्वामित्रनिबद्धानां स्त्रीरूपधारीणीनां विद्यानामार्तस्वरं श्रुत्वा नृपो हरिश्चन्द्रस्तासां त्रासयितारमभिलक्ष्य कथयति—

**कोऽयं बध्नाति वस्त्रान्ते पावकं पापकृन्नरः।**
**बलोष्णतेजसा दीप्ते मयि पत्यावुपस्थिते॥**

---

१. विष्णुपु० ५, १४, २-३

२. भागवतपु० ४, ५, ३

**सोऽद्य मत्कार्मुकाक्षेपविदीपितदिगन्तरैः ।**
**शरैर्विभिन्नसर्वाङ्गो दीर्घनिद्रां प्रवेक्ष्यति ॥**[1]

अत्रालक्षिताय विश्वामित्ररूपालम्बनविभावाय कुप्यतो राज्ञो हरिश्चन्द्रस्य समुत्पन्नः क्रोधः स्थायिभावः समुत्पन्नैरावेगवेपथ्वादिभिरुद्दीपनविभावैः पुष्टिं नेनीयमानः सन् रौद्ररसाख्यां व्रजति ।

## ५. वीररसः

उत्साहोऽस्य रसस्य स्थायिभावः । उत्साहस्येदं लक्षणमग्निपुराणे—

**पुरुषानुसमोऽप्यर्थो यः स उत्साह उच्यते ॥**[2]

पौरुषस्य ( पराक्रमस्य ) यो भावः स उत्साह इति नाम्ना व्यपदिश्यते । विष्णुधर्मोत्तरपुराणमतेन मोहनिवृत्त्यनन्तरमुद्योगात्मको विवेकयुक्तश्च यो भावः समुदेति स एवोत्साहः ।[3] सरस्वतीकण्ठाभरणमतेन कार्यारब्धिसमये तन्निष्पादयितुं स्थैर्यातिशयान्वितारम्भ एवोत्साहः ।[4] भागवतमार्कण्डेयपुराणयोरस्य रसस्यानेकेषु स्थलेषु प्रयोगः परं विष्णुपुराणे क्वचिदेवावलोक्यते । अग्निपुराणेऽस्येमे भेदाः प्रोक्ताः —

**दानवीरो धर्मवीरो युद्धवीर इति त्रयम् ।**
**वीरस्तस्य च निष्पत्तिहेतुरुत्साह इष्यते ॥**[5]

पात्राणां भेदाद् दानवीरधर्मवीरयुद्धवीराख्यास्त्रयो भेदाः । उत्साहाद्धि रसस्यास्य निष्पत्तिर्जायते ।

**१. दानवीरः** — मार्कण्डेयपुराणस्य हरिश्चन्द्रोपाख्याने विश्वामित्रं प्रति हरिश्चन्द्रस्य नृपतेरियमुक्तिः —

**उच्यतां भगवन् यत्ते दातव्यमविशङ्कितम् ।**
**दत्तमित्येव तद्विद्धि यद्यपि स्यात्सुदुर्लभम् ॥**[6]

---

१. मार्कण्डेयपु० ७, १२-१३
२. अग्निपु० ३३६, १५
३. असौ मोहाभिनिवृत्तौ व्यवसायनयात्मकः ।
उत्साहस्त्वभिनेयः···॥ विष्णुधपु० ३, ३१, ८
४. कार्यारम्भेषु संरम्भः स्थेयानुत्साह इष्यते ॥ सरस्वतीक० ५, १४०
५. अग्निपु० ३४२, १४
६. मार्कण्डेयपु० ७, २३

अत्र सम्प्रदानभूताद् विश्वामित्रादालम्बनविभावादुत्पन्नो राज्ञो हरिश्चन्द्रस्योत्साहः स्थायिभावो वितर्कादिभिर्व्यभिचारिभिः पुष्टिं प्राप्यमाणो दानवीरपात्राश्रितस्य वीररसस्य सञ्ज्ञां भजते ।

**२. धर्मवीरः** — भागवतपुराणे बलिर्नृपतिर्बटुरूपिणं भगवन्तं वामनं कथयति—

**नाहं बिभेमि निरयान्नाधन्यादसुखार्णवात् ।**
**न स्थानच्यवनान्मृत्योर्यथा विप्रप्रलम्भनात् ॥**[1]

अत्र याचकीभूताद् भगवतो वामनादालम्बनविभावादुत्पन्नो बलेर्नृपस्योत्साहाख्यः स्थायिभावो धृतिवितर्कादिभिर्व्यभिचारिभावैः पोषं नीयमानो धर्मवीरपात्राश्रितस्य वीररसस्य नामधेयतां गच्छति ।

**३. युद्धवीरः** — मार्कण्डेयपुराणस्य देवीमाहात्म्यप्रसङ्गे शुम्भस्य दूतं प्रति भगवत्या दुर्गाया इयमुक्तिः —

**यो मां जयति सङ्ग्रामे यो मे दर्पं व्यपोहति ।**
**यो मे प्रतिबलो लोके स मे भर्त्ता भविष्यति ॥**[2]

अत्र भर्तृरूपेणाभिलषणीयादलौकिकविक्रमशालिपुरुषरूपादालम्बनविभावात्समुत्पन्नो दुर्गाया उत्साहः स्थायिभावो धृतिवितर्कादिभिर्व्यभिचारिभावैः पुष्टिं नेनीयमानो युद्धवीरपात्राश्रितस्य वीररसस्याभिख्यां प्राप्नोति ।

## ६. भयानकरसः

अस्य रसस्य भयमिति स्थायिभावः । अग्निपुराणे भयस्येदं लक्षणम्—

**चित्रादिदर्शनाच्चेतोवैक्लव्यं ब्रुवते भयम् ॥**[3]

चित्रस्य दृश्यादीनां च दर्शनात्समुत्पन्नश्चेतसः सम्भ्रम एव भयम् । विष्णुधर्मोत्तरपुराणे भयस्योत्पत्तिः स्वयंकृतापराधाज्जायत इति प्रोक्तम् ।[4] सरस्व-

---

१. भागवतपु० ८, २०, ५

२. मार्कण्डेयपु० ८२, ७२

३. अग्निपु० ३३९, १६

४. स्वापराधसमुद्भूतं भयं नामेह जायते । विष्णुधपु० ३, ३१, ६

तीकण्ठाभरणस्य लक्षणमग्निपुराणोक्तलक्षणेन सह सङ्गच्छते ।[1] एष रसो भागवतपुराणे तु यत्रकुत्रचिदेवावलोक्यते परं विष्णुमार्कण्डेयपुराणेष्वस्याल्पीयान् प्रयोगः । अग्निपुराणे नास्य भेदाः प्रतिपादिताः ।

भागवतपुराणस्य नृसिंहावतारप्रसङ्गे भगवतो नृसिंहस्य स्वरूपस्य वर्णनम् —

**करालदंष्ट्रं करवालचञ्चल-**
**क्षुरान्तजिह्वं भ्रुकुटीमुखोल्बणम् ।**
**स्तब्धोर्ध्वकर्णं गिरिकन्दराद्भुत-**
**व्यात्तास्यनासं हनुभेदभीषणम् ॥**

**तं श्येनवेगं शतचन्द्रवर्त्मभि-**
**श्चरन्तमच्छिद्रमुपर्यधो हरिः ।**
**कृत्वाट्टहासं खरमुत्स्वनोल्बणं**
**निमीलिताक्षं जगृहे महाजवः ॥**[2]

अत्र नृसिंहरूपादालम्बनविभावात्समुत्पन्नो हिरण्यकशिपोर्भयाख्यः स्थायिभावो जडतादिभिर्व्यभिचारिभावैः पुष्टिं नीयमानो भयानकरसरूपतां व्रजति ।

मार्कण्डेयपुराणस्य हरिश्चन्द्रोपाख्याने विश्वामित्रशापभीतस्य नृपस्य हरिश्चन्द्रस्य दशाया वर्णनम्—

**हरिश्चन्द्रस्ततो राजा चिन्तावस्थितजीवितः ।**
**प्रसीदेति वदन् पादावृषेर्जग्राह विह्वलः ॥**[3]

अत्र शापप्रदानायोद्यताद् विश्वामित्रादालम्बनविभावादुत्पन्नो हरिश्चन्द्रस्य नृपतेर्भयाख्यस्थायिभावः शङ्कादिभिर्व्यभिचारिभिः पुष्टः सन् भयानकरसरूपतां व्रजति ।

## ७. बीभत्सरसः

अस्य रसस्य स्थायिभावस्य जुगुप्सेति नाम । अग्निपुराणे जुगुप्साया इदं

---

१. भयं चित्तस्य वैक्लव्यं रौद्रादिजनितं विदुः । सरस्वतीक० ५, १४१

२. भागवतपु० ७, ८, २१; २८

३. मार्कण्डेयपु० ८, ६२

लक्षणम् —

**जुगुप्सा च पदार्थानां निन्दा दौर्भाग्यवाहिनाम् ॥**[1]

गर्हितानमङ्गलकरांश्च पदार्थान् प्रति निन्दाया अरुचेर्वा भावो जुगुप्सेत्यधिभीयते। विष्णुधर्मोत्तरपुराणस्य सरस्वतीकण्ठाभरणस्य च लक्षणे अग्निपुराणोक्तलक्षणेन सह संवदतः।[2] एष रसस्त्रिष्वेव पुराणेषु क्वचित्क्वचिदेवावलोक्यते। अग्निपुराणेऽस्य भेदावेवं निरूपितौ—

**उद्वेजनः क्षोभणश्च बीभत्सो द्विविधः स्मृतः ।**
**उद्वेजनः स्यात्प्लुत्याद्यैः क्षोभणो रुधिरादिभिः ॥**[3]

बीभत्सरसस्योद्वेजनक्षोभणाख्यौ द्वौ भेदौ। नाट्येषूद्वेजनस्य प्रदर्शनमुत्प्लुत्यादिना शरीराङ्गसञ्चालनात् क्षोभणस्य च रक्तपातादिभ्यो जायते।

१. **उद्वेजनः** — यत्र मर्यादालङ्घनादिभ्यो धर्मापेतकर्मभ्यो घृणा समुद्भवति।

२. **क्षोभणः**—यत्र रक्तपातादिभ्यो नेत्रादीनामिन्द्रियाणां कृतेऽरुचिकरेभ्यो वस्तुभ्यो जुगुप्सोत्पद्यते।

**(कः) उद्वेजनः** —भागवतपुराणे वेनकथायामधर्मिणो वेनविषये मुनीनामियमुक्तिः —

**नायमर्हत्यसद्वृत्तो नरदेववरासनम् ।**
**योऽधियज्ञपतिं विष्णुं विनिन्दत्यनपत्रपः ॥**
**को वेनं परिचक्षीत वेनमेकमृतेऽशुभम् ।**
**प्राप्त ईदृशमैश्वर्यं यदनुग्रहभाजनः ॥**[4]

अत्र कुमार्गगामिन आलम्बनभूताद् वेनान्नृपादुत्पन्नो मुनीनां जुगुप्सास्थायिभाव आवेशशङ्कादिभिर्व्यभिचारिभावैः पुष्टिं नीतः सन्नुद्वेजनबीभत्सरसतां प्राप्नोति।

भागवतपुराणे सभायामुपविष्टस्य शिवस्य स्वरूपं दक्षो नृपः कुपितः

---

१. अग्निपु० ३३९, १६

२. (कः) बीभत्सदर्शनाद्यैस्तु जुगुप्सा नाम जायते ॥ विष्णुधपु० ३, ३१, १०

(खः) जुगुप्सा गर्हणार्थानां दोषसन्दर्शनादिभिः ॥ सरस्वतीक० ५, १४१

३. अग्निपु० ३४२, १६

४. भागवतपु० ४, १४, ३२-३३

सन्नित्थं वर्णयति—

> **प्रेतावासेषु घोरेषु प्रेतैर्भूतगणैर्वृतः ।**
> **अटत्युन्मत्तवन्नग्नो व्युप्तकेशो हसन् रुदन् ।।**
> **चिताभस्मकृतस्नानः प्रेतस्रङ्न्रस्थिभूषणः ।**
> **शिवापदेशो ह्यशिवो मत्तो मत्तजनप्रियः ।।**
> **पतिः प्रमथभूतानां तमोमात्रात्मकात्मनाम् ।।**[1]

अत्रालम्बनविभावभूतादशिवरूपाच्छिवात्समुत्पन्नो दक्षस्य जुगुप्सास्थायिभाव आवेशादिभिर्व्यभिचारिभावैः पोष्यमाण उद्वेजनाख्यबीभत्सरसतामाप्नोति ।

**(ख:) क्षोभणः** —मार्कण्डेयपुराणस्य हरिश्चन्द्रोपाख्याने श्मशानस्य वर्णनम् —

> **गृध्रगोमायुसङ्कीर्णं श्ववृन्दपरिवारितम् ।**
> **अस्थिसङ्घातसङ्कीर्णं महादुर्गन्धसङ्कुलम् ।।**
> **सवह्निगर्भैरशिवैः शिवारुतै-**
> **र्निनादितं भीषणरावगह्वरम् ।**
> **भयं भयस्याप्युपसञ्जनैर्भृशं**
> **श्मशानमाक्रन्दविरावदारुणम् ।।**[2]

अत्रालम्बनविभावभूताच्छ्मशानात्समुत्पन्नो राज्ञो हरिश्चन्द्रस्य जुगुप्सास्थायिभावो भयावहित्थादिभिर्व्यभिचारिभावैः पुष्टिं नीतः सन् क्षोभणबीभत्सरसरूपतां याति ।

## ८. अद्भुतरसः

विस्मयोऽस्य स्थायिभावः । अग्निपुराणे विस्मयस्येदं लक्षणम्—

> **विस्मयोऽतिशयेनार्थदर्शनाच्चित्तविस्मृतिः ।**[3]

पदार्थेषु गुणातिशयदर्शनानन्तरं येन भावेन चेतो वञ्च्यत इव लुभ्यत इव विस्मृतमिव वा क्रियते स विस्मयः । विष्णुधर्मोत्तरपुराणेऽस्य समुत्पत्ति-

---

१. भागवतपु० ४, २, १४-१५

२. मार्कण्डेयपु० ८, १११; १२१

३. अग्निपु० ३३९, १५

रलौकिककर्मनिष्पादनादुक्ता ।[1] सरस्वतीकण्ठाभरणस्य मतमग्निपुराणेन सह सङ्गच्छते ।[2] भागवतपुराणेऽस्य प्रयोगः प्राचुर्येण विष्णुमार्कण्डेयपुराणयोश्च क्वचित्क्वचिदुपलभ्यते । अग्निपुराणे नास्य भेदाः प्रकल्पिताः पुराणत्रयादस्येमानि निदर्शनानि—

विष्णुपुराणे नारदः स्वर्गवासिनां समक्षं पातालस्योत्कर्षं वर्णयति—

**दिवार्करश्मयो यत्र प्रभां तन्वन्ति नातपम् ।**
**शशिरश्मिर्न शीताय निशि द्योताय केवलम् ॥**
**भक्ष्यभोज्यमहापानमुदितैरपि भोगिभिः ।**
**यत्र न ज्ञायते कालो गतोऽपि दनुजादिभिः ॥[3]**

अत्रार्करश्म्याद्युपेतपातालरूपालम्बनविभावादुत्पन्नः स्वर्गवासिनां विस्मयाख्यस्थायिभावो वितर्कादिभिर्व्यभिचारिभावैः पुष्टिं नीतः सन्नद्भुतरस इति सञ्ज्ञामाप्नोति ।

मार्कण्डेयपुराणे शक्रादिकृतदेवीस्तवः —

**दृष्ट्वा तु देवि कुपितभ्रूकुटिकराल-**
**मुद्यच्छशाङ्कसदृशच्छवि यन्न सद्यः ।**
**प्राणान्मुमोच महिषस्तदतीव चित्रं**
**कैर्जीव्यते हि कुपितान्तकदर्शनेन ॥[4]**

मुखमिति शेषः । अत्रालम्बनविभावभूताया देव्याः समुत्पन्न इन्द्रादीनां देवानां विस्मयाख्यः स्थायिभावो हर्षरोमोद्गमादिभिर्व्यभिचारिभावैः पुष्टिं प्राप्यमाणोऽद्भुतरसाभिख्यां लभते ।

भागवतपुराणस्य हिरण्यकशिपुवधप्रसङ्गे हिरण्यकशिपुर्भगवन्तं नृसिंहं दृष्ट्वा चिन्तयति—

**स सत्त्वमेनं परितोऽपि पश्यन्**
**स्तम्भस्य मध्यादनु निर्जिहानम् ।**

---

१. कर्मातिशयनिर्वृत्तौ विस्मयो हर्षसम्भवः । विष्णुधपु० ३, ३१, ७

२. विस्मयश्चित्तविस्तारः पदार्थातिशयादिभिः । सरस्वतीक० ५, १४२

३. विष्णुपु० २, ५, ८-९

४. मार्कण्डेयपु० ८१, १३

नायं मृगो नापि नरो विचित्र-
महो किमेतन्नृमृगेन्द्ररूपम् ॥[1]

अत्र नृसिंहरूपादालम्बनविभावादुत्पन्नो हिरण्यकशिपोर्विस्मयाख्यः स्थायिभावो जडतादिभिर्व्यभिचारिभावैः पुष्टः सन्नद्भुतरसरूपतां याति ।

## ६. शान्तरसः

प्राचीनतमैराचार्यैरष्टावेव रसा मताः । मुनिना भरतेनेमे रसा नाट्य-शास्त्रे प्रोक्ताः —

शृङ्गारहास्यकरुणरौद्रवीरभयानकाः ।
बीभत्साद्भुतसंज्ञौ चेत्यष्टौ नाट्ये रसाः स्मृताः ।
एते ह्यष्टौ रसाः प्रोक्ता द्रुहिणेन महात्मना ॥[2]

एतेषां रसानामष्टाविमे स्थायिभावाः —

रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा ।
जुगुप्सा विस्मयश्चेति स्थायिभावाः प्रकीर्तिताः ॥[3]

नाट्यशास्त्रोक्तयोरनयोः श्लोकयोः पाठान्तरोऽप्यवलोक्यते—

शृङ्गारहास्यकरुणवीररौद्रभयानकाः ।
बीभत्साद्भुतशान्ताश्च नव नाट्यरसाः स्मृताः ॥
एते नव रसाः प्रोक्ता द्रुहिणेन महात्मना ।
रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा ।
जुगुप्सा विस्मयश्चैव स्थायिभावाः प्रकीर्तिताः ॥[4]

अनेन पाठभेदेन वस्तुतो भरतनाट्यशास्त्रेऽष्टा एव रसाः संख्याताः परं यदा शान्तरसो बहुभिराचार्यैरस्थाप्यत तदैतयोः श्लोकयोः किञ्चित्परिवर्तनं व्यधीयतेति प्रतीयते । अस्य सङ्केतोऽभिनवभारत्या एतत्पाठभेदविषयिण्या

---

१. भागवतपु० ७, ८, १९

२. नाट्यशा० ६, १५-१६

३. तत्रैव ६, १७

४. तत्रैव ६, १५-१७ (पाठान्तरम्)

टिप्पण्योपलभ्यते ।[1] एतदेव वी० राघवनमहोदयेन स्वीकृतम् ।[2] अग्निपुराणे त्वस्य रसस्य गणना नवसु रसेषु विहिता ।[3]

शान्तरसस्य शम इति स्थायिभावः । अग्निपुराणे शमस्य न किमपि लक्षणम् । विष्णुधर्मोत्तरपुराणे त्वस्य स्थायिभावो निर्वेदो मतः, स च दारिद्र्येष्टविनाशेन च जायते ।[4] सरस्वतीकण्ठाभरणे शान्तरसस्य स्थायिभावो धृतिर्मता सा चाभीष्टार्थस्य प्राप्तौ जायते ।[5] भागवतपुराणे रसोऽयं प्राचुर्येण दृश्यते विष्णुमार्कण्डेयपुराणयोश्च यत्रकुत्रचिदेव ।

विष्णुपुराणे प्रह्लादस्य दैत्यबालान् प्रतीयमुक्तिः —

**असारसंसारविवर्तनेषु**
**मा यात तोषं प्रसभं ब्रवीमि ।**
**सर्वत्र दैत्यास्समतामुपेत**
**समत्वमाराधनमच्युतस्य ॥**[6]

अत्रालम्बनविभावभूतात्समवृत्तिमतः प्रह्लादात्समुत्पन्नो दैत्यबालानां हृन्निष्ठः शमाख्यः स्थायिभावो निर्वेदादिभिर्व्यभिचारिभावैः पुष्टिं नीतः सन् शान्तरसरूपतां याति ।

भागवतपुराणस्यावधूतोपाख्याने पिङ्गलाया इयमुक्तिः —

**सन्तुष्टा श्रद्दधत्येतद् यथा लाभेन जीवती ।**
**विहराम्यमुनैवाहमात्मना रमणेन वै ॥**[7]

---

१. …तेन प्रथमं रसाः । ते च नव । शान्तापलापिनस्त्वष्टाविति तत्र पठन्ति । … तत्र शान्तस्य स्थायी 'विस्मयशमा' इति कैश्चित्पठितः । उत्साह एवास्य स्थायीत्यन्ये । जुगुप्सेति केचित् । सर्वं इत्येके । तत्त्वज्ञानजो निर्वेदोऽस्य स्थायी ।
अभिनवभारती, भाग १, पृ० २६७-२६८

२. "शृङ्गार+बीभत्साद्भुतसंज्ञौ चेत्यष्टौ नाट्ये रसाः स्मृताः became शृङ्गार+बीभत्साद्भुतशान्ताश्च नवनाट्ये रसाः स्मृताः and जुगुप्सा विस्मयश्चेति स्थायिभावाः प्रकीर्तिताः was read as जुगुप्साविस्मयशमाः स्थायिभावाः प्रकीर्तिताः । (V. Raghavan : The Number of Rasas, Chapter IV, p. 59, The Adyar Library, Adyar, 1940)

३. शृङ्गारहास्यकरुणा रौद्रवीरभयानकाः ।
बीभत्साद्भुतशान्ताख्याः …॥ अग्निपु० ३३९, ८-९

४. दारिद्र्येष्टविनाशे च निर्वेदो नाम जायते ॥ विष्णुधपु० ३, ३१, १११

५. अभीष्टार्थस्य सम्प्राप्तौ स्पृहापर्याप्तता धृतिः ॥ सरस्वतीक० ५, १५१

६. विष्णुपु० १, १७, ९०

७. भागवतपु० ११, ८, ४०

अत्र निराशाहेतुभूतेभ्यः प्रियधनिकरूपालम्बनविभावेभ्यः समुत्पन्नः पिङ्गलाया हृन्निष्ठः शमाख्यः स्थायिभावो निर्वेदादिभिर्व्यभिचारिभिः पुष्टिं प्राप्य शान्तरसतां भजते ।

## १०. भक्तिरसः

मुनिना भरतेन नवसु रसेषु भक्तिरसो न परिगणितः भामहदण्डिभ्यां च प्रेयस्यलङ्कारे भक्तिरसोऽन्तर्भावितः ।[1] मन्मटेनायं रसो भावत्वेन मतः[2] विश्वनाथोऽपि तमनुसरन्नेतं रसं भावत्वेनैव निरूपयति ।[3]

इदानीं भक्तिरसविषये किञ्चित्सविशेषं वर्णनं नाप्रासङ्गिकम् । डा० राघवनमहोदयेन भक्तिरसविषये नैकेषामाचार्याणां मतानि रसानां संख्येति नाम्नि ग्रन्थे सङ्कलितानि ।[4] तन्मतमुपजीव्यात्र संक्षेपेण भक्तेः स्वरूपं विशदीक्रियते । भक्तिशब्दस्येयं व्युत्पत्तिः — भक्तिशब्दे भज् सेवायामिति धातोः स्त्रियां क्तिन्निति[5] सूत्रेण भावे क्तिन् प्रत्ययः । एवं भक्तिरसस्य व्युत्पत्तिनिमित्तेऽर्थे सेवाभावस्यैव प्राधान्यम् । एष शब्दो मधुसूदनसरस्वतीपादैर्नूतनरीत्या व्याख्यातः । प्रायशोऽन्यैराचार्यैरीश्वरं प्रति यो रतिभावः स एव भक्तिरिति प्रोक्तम् । परं मधुसूदनसरस्वतीमहोदयेन चित्तस्य भगवदाकारतैव भक्तिरभिहिता ।[6] अपि चास्य

---

१. (कः) प्रेयो गृहागतं कृष्णमवादीद्विदुरो यथा ।
अद्य या मम गोविन्द जाता त्वयि गृहागते ॥
कालेनैषा भवेत्प्रीतिस्तवैवागमनात्पुनः ॥ काव्याल० ३, ५
(खः) प्रेयः प्रियतराख्यानम्…
अद्य या मम गोविन्द जाता त्वयि गृहागते ।
कालेनैषा भवेत् प्रीतिस्तवैवागमनात्पुनः ॥ काव्याद० २, २७५-२७६

२. रतिर्देवादिविषया व्यभिचारी तथाञ्जितः ।
भावः प्रोक्तः … ॥ काव्यप्र० ४, ३५

३. सञ्चारिणः प्रधानानि देवादिविषया रतिः ।
उद्बुद्धमात्रः स्थायी च भाव इत्यभिधीयते ॥ साहित्यद० ३, २६०-२६१

४. V. Raghavan: The Number of Rasas, pp. 129-137

५. अ० ३, ३, ९४

६. भजनमन्तःकरणस्य भगवदाकारतारूपं भक्तिः ।
द्रुतस्य भगवद्धर्माद् धारावाहिकतां गता ।
सर्वेशे मनसो वृत्तिर्भक्तिरित्यभिधीयते ॥ भगवद्भक्तिरसायनम् १, ३

शब्दस्य करणव्युत्पत्तिं प्रतिपादयता तेन श्रवणकीर्तनादिसाधनान्यपि भक्तिशब्देन गृहीतानि ।[1]

अनेन महाभागेन भक्तिरसस्य निष्पत्तिरतिविस्तरेणैवं विशदीकृता—

'सकलविषयविमुखमनसः महाभागस्य कस्यचित् भगवद्गुणगरिमग्रन्थनरूपग्रन्थश्रवणजनितद्रुतिरूपायां मनोवृत्तौ सर्वसाधनफलभूतायां गृहीतभगवदाकारायां विभावानुभावव्यभिचारिसंयोगेन रसरूपतया विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः' इति ।

'विभावो द्विविधः —आलम्बनविभावः उद्दीपनविभावश्च । तत्र आलम्बनविभावो भगवान्, उद्दीपनविभावः तुलसीचन्दनादिः, अनुभावो नेत्रविक्रियादिः, व्यभिचारिणो भावाः निर्वेदादयः, व्यक्तीभवद्भगवदाकारतारूपरसाख्यः स्थायिभावः परमानन्दसाक्षात्कारात्मकः प्रादुर्भवति, स एव भक्तियोग इति, तं परमं निरतिशयं पुरुषार्थं वदन्ति रसज्ञाः ।'[2]

देवादिविषया रतिरिति प्रोच्य भक्तिं भावमात्रत्वेनाङ्गीकुर्वतो मम्मटादीन् प्रति मधुसूदनसरस्वतीमहोदयस्येयमुक्तिः —यदा खल्वियं भावरतिरिन्द्रादिदेवविषया तदैवैषा भावकोटिं याति परं तस्याः सम्बन्धः परमानन्दरूपेण ब्रह्मणा सह न विधेयो यतो हि भावरतिरियं परानन्दस्वरूपात्मिका न दृश्यते ।[3]

मधुसूदनसरस्वतीमतेन भक्तिरस एव सर्वोत्कृष्टः पारमार्थिकश्च यतोह्यस्मिन् दुःखलवस्पर्शवर्जितं परिपूर्णं परमं सुखं भक्तेनानुभूयते । शृङ्गारादयो रसास्तत्तुलनायां क्षुद्रतराः सूर्यसम्मुखे खद्योतसन्निभाश्च ।[4]

---

१. भज्यते सेव्यते भगवदाकारमन्तःकरणं क्रियते अनया इति करणव्युत्पत्त्या भक्तिशब्देन श्रवणकीर्तनादिसाधनमभिधीयते ॥ भगवद्भक्तिरसायनम् पृ० ८

२. तत्रैव पृ० ४

३. रतिर्देवादिविषया व्यभिचारी तथोर्जितः ।
भावः प्रोक्तो रसो नेति यदुक्तं रसकोविदैः ॥
देवान्तरेषु जीवत्वात् परानन्दाप्रकाशनात् ।
तद्योज्यः परमानन्दरूपे न परमात्मनि ॥ तत्रैव २, ७५-७६

४. कान्तादिविषया वा ये रसाद्यास्तत्र नेदृशम् ।
रसत्वं पुष्यते पूर्णसुखास्पर्शित्वकारणात् ।
परिपूर्णरसा क्षुद्ररसेभ्यो भगवद्रतिः ।
खद्योतेभ्य इवादित्यप्रभेव बलवत्तरा ॥ तत्रैव २, ७७-७८

रूपगोस्वामिना भक्तिरसामृतसिन्धौ भक्तिरसस्य भेदा एवं प्रदर्शिताः —

भवेद् भक्तिरसोऽप्येष मुख्यगौणतया द्विधा ।
पञ्चधापि रतेरैक्यान्मुख्यस्त्वेक इहोदितः ॥
सप्तधात्र तथा गौण इति भक्तिरसोऽष्टधा ।
मुख्यस्तु पञ्चधा शान्तः प्रीतिः प्रेयांश्च वत्सलः ॥
मधुरश्चेत्यमी ज्ञेया यथापूर्वमनुत्तमाः । (अनुत्तमाः-कनिष्ठाः)
हास्योऽद्भुतस्तथा वीरः करुणो रौद्र इत्यपि ॥
भयानकः स बीभत्स इति गौणश्च सप्तधा ।
एवं भक्तिरसो भेदाद् द्वयोर्द्वादशधोच्यते ॥[1]

एवमत्र भक्तिरसस्य द्वौ भेदौ प्रकल्पितौ —

१. मुख्यभक्तिः २. गौणभक्तिश्च ।

मुख्यभक्तेः पुनः पञ्चेमे भेदाः —

१. शान्तः २. प्रीतिः ३. प्रेयान् ४. वत्सलो ५. मधुरश्च ।

गौणभक्तिरसस्य चेमे सप्तभेदाः —

१. हास्यः २. अद्भुतः ३. वीरः ४. करुणः ५. रौद्रः ६. भयानकः ७. बीभत्सश्च ।

कविराजेन श्रीकृष्णेन भक्तानां भेदेन कृष्णभक्तेरिमे पञ्च प्रकाराः प्रोक्ताः —

भक्तभेदे रतिभेद पञ्च परकार ।
शान्तरति दास्यरति सख्यरति आर ॥
वात्सल्यरति मधुररति पञ्चविभेद ।
रतिभेदे कृष्णभक्ति रस पञ्च भेद ॥
शान्त दास्य सख्य वात्सल्य मधुर रस नाम ।
कृष्णभक्तिरसमध्ये ए पञ्च परधान ॥
हास्याद्भुतवीरकरुणबीभत्स भय रौद्र ।
पञ्चविध भक्ते गौण सप्त रस हय ॥
पञ्च रसस्थायी व्यापि रहे भक्तनते ।
सप्त गौण आगन्तुक पा इये कारणे ॥[2]

---

१. भक्तिरसा० दक्षिणविभागः पञ्चमलहरी ६५-६८ (पृ० ३०८-३०९)

२. चैतन्यचरितामृतम्, मध्य० १९, पृ० २१३

शान्तदास्यसख्यवात्सल्यमधुरा इतीमे पञ्चरसा मुख्या इतरे च हास्यादयः सप्त रसा गौणाः। एषां मुख्यानां पञ्चरसानामन्ये सप्तरसा गौणभावाङ्गीकाराद् व्यभिचारिभावाः परं यदा तैः कृष्णरतिर्वर्ण्यते तदा ते मुख्यरसपदवीमाप्नुवन्ति।

एतेषां शान्तादिरसानां शान्तरत्यादयः स्थायिभावाः। इमे हि भावाः शान्त्यादिवृत्तिमत्सु भक्तेषु तिष्ठन्ति। अस्य रसस्याग्निविष्णुधर्मोत्तरपुराणेषु न किमपि वर्णनम्। विष्णुभागवतपुराणयोरेष प्राचुर्येण प्रयुक्तः। मार्कण्डेयपुराणेऽस्याल्पीयान् प्रयोगः। इदानीं भक्तिरसस्यैतेषां पञ्चभेदानां तत्सम्बद्धस्थायिभावानां च स्वरूपं प्रदर्श्य विष्णुभागवताभ्यामेतेषामुदाहरणानि प्रदर्श्यन्ते।

**(कः) शान्तभक्तिरसः** — अस्य शान्तरतिः स्थायिभावः। अस्यां शान्तरत्यां योगचिन्तायाः प्राधान्यम्। अत्र भक्ताः कृष्णं परमात्मरूपेण परब्रह्मरूपेण वा ध्यानस्य विषयं कुर्वन्ति। दास्यादिभावोपेतानां भक्तानामिव कृष्णं प्रति ममत्वबुद्धिर्नावतिष्ठते। अपगतकल्मषाणां युक्तचेतसां योगिनामेवैतादृशी रतिर्जायते।

विष्णुपुराणे प्राचीनबर्हिषः पुत्राणामिदं भगवदाराधनम् —

**अदीर्घह्रस्वमस्थूलमण्वश्यामलोहितम्।**
**अस्नेहच्छायमतनुमसक्तमशरीरिणम्॥**
**परमेशत्वगुणवत्सर्वभूतमसंश्रयम्।**
**नताः स्म तत्पदं विष्णोर्जिह्वादृग्गोचरं न यत्॥**[1]

अत्र भगवद्रूपालम्बनविभावात्समुत्पन्नः सचेतसां शान्तरतिस्थायिभावः स्मृत्यादिभिर्व्यभिचारिभिः पुष्टिङ्गतः सन् शान्तभक्तिरसरूपतामधिगच्छति।

**(खः) दास्यभक्तिरसः** — अस्य स्थायिभावस्य दास्यरतिरिति नाम। यदा भक्तैर्भगवता कृष्णेन सह (तं निखिलैश्वर्यसम्पन्नं प्रभुं मत्वा) सेव्यसेवकभावः परिकल्प्यते तदा दास्यरतिर्जायते। मीराविदुरसूरदासादीनां भक्तानां कृष्णेन सहैतादृश एव सम्बन्ध आसीत्।

भागवतपुराणे कृष्णं प्रति तद्भक्तस्योद्धवस्येयमुक्तिः —

**को न्वीश ते पादसरोजभाजां**
**सुदुर्लभोऽर्थेषु चतुर्ष्वपीह।**

---

१. विष्णुपु० १, १४, ३९-४३

तथापि नाहं प्रवृणोमि भूमन्
भवत्पदाम्भोजनिषेवणोत्सुकः ॥[1]

अत्र भगवद्रूपालम्बनविभावादुत्पन्न उद्धवस्य दास्यरत्याख्यः स्थायिभावः स्मृत्यादिभिर्व्यभिचारिभिः परिपोष्यमाणो दास्यरसतामश्नुते।

(गः) **सख्यभक्तिरसः** — अस्य स्थायिभावः सख्यरतिरित्युच्यते। यदा भक्तानां कृष्णं प्रति सहचरभावोचितः परमो विश्रम्भः समत्वस्य च भावो जायते तदैषा सख्यरतिः समुत्पद्यते। यथा गोपाः कृष्णेन सह मित्रभावेन व्यावहरन्स्तथैव भक्ता अपि समुपजातायामस्यां रतौ तेन सह व्यवहरन्ति।

भागवतपुराणे व्रजार्भकाणां कृष्णेन सह विहितानामशनपानादिक्रियाणामेवंविधं वर्णनम्—

कृष्णस्य विष्वक् पुरुराजिमण्डलै-
रभ्याननाः फुल्लदृशो व्रजार्भकाः।
सहोपविष्टा विपिने विरेजु
श्छदा यथाम्भोरुहकर्णिकायाः ॥
बिभ्रद् वेणुं जठरपटयोः श्रृङ्गवेत्रे च कक्षे
वामे पाणौ मसृणकवलं तत्फलान्यङ्गुलीषु।
तिष्ठन् मध्ये स्वपरिसुहृदो हासयन् नर्मभिः स्वैः
स्वर्गे लोके मिषति बुभुजे यज्ञभुग् बालकेलिः ॥[2]

अत्रालम्बनभूताद् भगवतः कृष्णात्समुत्पन्नो गोपबालानां सख्यरत्याख्यः स्थायिभावो हर्षादिभिर्व्यभिचारिभिः पोषं गतः सन् सख्यरसाभिधां लभते।

(घः) **वात्सल्यभक्तिरसः** — वात्सल्यरतिरस्य स्थायिभावः। यदा ममत्वबुद्ध्यतिशयाद् भगवन्तं कृष्णादिकमात्मनोऽपत्यं मन्यमाना भक्तास्तं प्रति पितृसुलभमनुरागं प्रदर्शयन्ति तस्मै क्रुध्यन्ति वा तदा तेषां हृदयेषु विद्यमानोऽयं भावो वात्सल्यरतिनामधेयतां याति। भगवतो भक्तस्य चैवंविधायां प्रीतौ पितृपुत्रयोर्मातृपुत्रयोर्वा सम्बन्धो जायते।

भागवतपुराणस्य बाललीलाप्रसङ्गे बलरामस्य कृष्णस्य च मात्रोरवस्थाया वर्णनम् —

तन्मातरौ निजसुतौ घृणया स्नुवन्त्यौ
पङ्काङ्गरागरुचिरावुपगुह्य दोर्भ्याम्।

---

१. भागवतपु० ३, ४, १५
२. तत्रैव १०, १३, ८; ११

दत्त्वा स्तनं प्रपिबतोः स्व मुखं निरीक्ष्य
मुग्धस्मिताल्पदशनं ययतुः प्रमोदम् ॥[1]

अत्रालम्बनविभावभूताभ्यां कृष्णबलरामाभ्यां समुत्पन्नस्तन्मात्रोर्यशोदा-रोहिण्योर्हृन्निष्ठो वात्सल्याख्यः स्थायिभावो हर्षादिभिर्व्यभिचारिभिः पुष्टिं प्राप्तो वात्सल्यभक्तिरसरूपतां याति ।

**(ङ) मधुरभक्तिरसः** — मधुररतिरस्य स्थायिभावः । अत्र भक्तानां कृष्णेन सह पतिपत्नीसदृशः सम्बन्धः । भरतेन शृङ्गाररसे शुचित्वमेध्यत्व-दर्शनीयत्वगुणानां स्थितिः स्वीकृत्यास्य रसस्य पवित्रताऽङ्गीकृता ।[2] परमस्य शब्दस्य व्युत्पत्तौ कामदेवस्य ग्रहणम् ।[3] यतो ह्येष शृङ्गारो लौकिकरसस्यार्थ-मेव व्यनक्ति कदाचिदेतस्मादेव कारणात् वैष्णवाचार्यैरलौकिकरसस्यार्थद्योतना-यास्मै मधुर इति सञ्ज्ञा प्रदत्ता । मधुरशब्देन शृङ्गारस्योज्ज्वलस्वरूपं गृह्यते । शृङ्गारशब्दस्य च व्युत्पत्तिनिमित्तादर्थादासज्यमानोऽश्लीलार्थः (शृङ्गं राति ददातीति) अप्यनेन निरस्यते । अस्योज्ज्वलरस इत्यपरं नाम ।

भागवतपुराणे सायङ्काले वनान्ताद् व्रजं प्रत्यावृत्तं कृष्णं विलोकयन्तीनां गोपीनां दशाया वर्णनम्—

पीत्वा मुकुन्दमुखसौरभमक्षिभृङ्गै-
स्तापं जहुर्विरहजं व्रजयोषितोऽह्नि ।
तत्सत्कृतिं समधिगम्य विवेश गोष्ठं
सव्रीडहासविनयं यदपाङ्गमोक्षम् ॥[4]

अत्रालम्बनरूपात् कृष्णात्समुत्पन्नो गोपिकानां मधुररत्याख्यः स्थायिभावो हर्षव्रीडादिभिर्व्यभिचारिभावैः पुष्टिं नीयमानो मधुररस इत्यभिख्यां व्रजति ।

---

१. भागवतपु० १०, ८, २३

२. तत्र शृङ्गारो नाम रतिस्थायिभावप्रभव उज्ज्वलवेषात्मकः यथा यत्किञ्चिल्लोके शुचि मेध्यं दर्शनीयं वा तच्छृङ्गारेणोपमीयते । यस्तावदुज्ज्वलवेषः स शृङ्गारवानित्युच्यते ।
नाट्यशा० ६, ४५, गद्यभागः

३. शृङ्गं हि मन्मथोद्भेदस्तदागमनहेतुकः । साहित्यद० ३, १८३

४. भागवतपु० १०, १५, ४३

## समीक्षणम्

अग्निपुराणस्यालङ्कारदोषगुणरीतीनां तत्तदध्यायेषु प्रधानतमानामनुप्रासाद्यलङ्काराणामसाधुत्वादिदोषाणां श्लेषादिगुणानां पाञ्चाल्यादिरीतीनां च लक्षणान्येव वर्णितानि । एतेषां निदर्शनान्यत्र न प्रदर्शितानि । अनेनात्रलक्षितानामेतेषामलङ्कारादीनां स्वरूपाणि सुविशदं न ज्ञायन्ते । परमिमानि लक्षणान्यधीत्य तत्तद्विषये परिचयात्मकं ज्ञानं तु ध्रुवमेवोपलभ्यते । अग्निपुराणस्य रसप्रकरणे तावत् प्रमुखतमानां रसानां लक्षणान्यपि न प्रस्तुतानि । अस्मात् खल्वेतत्प्रकरणमधीत्य रसानां परिचयो दुष्करः । शृङ्गाररसस्यैवात्र संक्षिप्तं लक्षणं दृश्यते ।[1] परं तदपि न तथा निपुणं प्रतिपादितं यथैतत्साहित्यदर्पणादिग्रन्थेषु ।[2] अन्येऽपि रसास्तेषु सलक्षणमुदाहृताः । रसानतिरिच्यानुभावस्य स्थायिसात्त्विकव्यभिचारिभावानां च लक्षणानि सविस्तरं प्रोक्तानि । रसप्रकरणे रसा न सम्यग् व्याख्यातास्तदङ्गीभूता अनुभावादयः प्राधान्येन निरूपिता इत्यनेन पुराणकारस्यानवधानता द्योत्यते । ननु लोके रसानां स्वरूपस्य सुप्रसिद्धत्वादियमुपेक्षावृत्तिरिति चेत्तदप्येषां रसानां स्वरूपस्य दुरवगाहित्वान्नोपपन्नं प्रतीयते ।

अस्मिन् पुराणे रसा ब्रह्मांशभूता मता यतो हि ते परमात्मनः (ब्राह्मणः) सत्त्वगुणाज्जायन्ते ।[3] विश्वनाथादिभिराचार्यैरिमे ब्रह्मास्वादसहोदरस्वरूपत्वेन मताः ।[4] यद्यप्युभयत्र रसानां स्वरूपमलौकिकं तथाप्यग्निपुराणे ब्रह्मणा सह रसानां साक्षात्सम्बन्धः प्रोक्तः इतरैराचार्यैस्तु तस्यानुभव एव ब्रह्मानन्दसदृशो निगदितः। तेषां मतेनायं रस आत्मनो भिन्नः सन्नप्यभिन्न इव प्रतीयते ।[5]

---

१. स्त्रीपुंसयोस्तद्वदयं तस्य निर्वर्तिका रतिः ।
निखिलाः सात्त्विका भावास्तत्र वैवर्ण्यप्रलयौ विना ॥
धर्मार्थकाममोक्षैश्च शृङ्गार उपचीयते ।
आलम्बनविशेषैश्च तद्विशेषैर्निरन्तरः ॥ अग्निपु० ३४२, ७-८

२. शृङ्गं हि मन्मथोद्भेदस्तदागमनहेतुकः ।
उत्तमप्रकृतिप्रायो रसः शृङ्गार इष्यते ॥ इत्यादयः साहित्यद० ३, १८३-१८६

३. सत्त्वादिगुणसन्तानाज्जायन्ते परमात्मनः । अग्निपु० ३३९, ६

४. सत्त्वोद्रेकादखण्डस्वप्रकाशानन्दचिन्मयः ।
वेद्यान्तरस्पर्शशून्यो ब्रह्मास्वादसहोदरः ॥ साहित्यद० ३, २

५. लोकोत्तरचमत्कारप्राणः कैश्चित्प्रमातृभिः ।
स्वाकारवदभिन्नत्वेनायमास्वाद्यते रसः ॥ तत्रैव ३, ३

अत्र साधारणीकरणसिद्धान्तोऽपि संक्षेपेणाभिहितः । अग्निपुराणे शृङ्गाररसस्यैव प्राधान्यमस्माद् रसप्रसङ्गे शृङ्गाररसस्य रतिरेव रसरूपतां यातीति प्रोक्तम् ।[1] वस्तुतोऽत्र रत्याख्यः स्थायिभावः सर्वेषामपरेषां स्थायिभावानां प्रतीकत्वेन प्रस्तुतम् । व्यभिचार्यादिसामान्यादिति पदे दृश्यमान आदिशब्दो विभावानुभावस्थायिभावानामपि ग्राहकः ।

अपि चात्रालम्बनविभावस्तु लक्षितः परमस्य धीरोदात्तादिनायकभेदानां स्वकीयादिनायिकाभेदानां च लक्षणानि न प्रस्तुतानि । एवमेवाष्टसु पौरुषभावेषु शोभाया द्वादशसु च स्त्रैणविभावेषु भावस्यैव लक्षणे विहिते शेषाणां स्वरूपं तु नास्मिन्नध्याये विशदीकृतम् । अन्यान्यप्येवंविधानि स्थलानि यत्र हि वर्ण्यविषयस्य नामग्रहणमेव न तु तस्य स्वरूपवर्णनम् ।

अन्यच्च पुराणेऽस्मिन् वर्णितानां शृङ्गारादिरसानामभिनयेन सहैव सम्बन्धविशेषः प्रतीयते । अभिनयादिनिरूपणाख्याध्याये पूर्वमभिनयस्य सात्त्विक-वाचिकाङ्गिकाहार्याख्याश्चत्वारो भेदाः सङ्ख्यातास्तदनन्तरमेव शृङ्गारादि-रसानां वर्णनं समारब्धम् ।[2] चतुर्विधमिमममभिनयं विलोक्य सामाजिकाः स्वचेतसि शृङ्गारादिरसाननुभवन्ति । शृङ्गारादिरसनिरूपणाख्येऽध्यायेऽपि द्वादशधा वाचोयुक्तिः सम्यग् व्याख्याता ।[3] इयं हि वाचोयुक्तिर्भाषणकलाया अपरः पर्यायः । अस्या आलापादयो भेदा अभिनयस्य समये पात्राणामुक्तिप्रत्युक्तिप्रकारमा-श्रित्यैव विहिताः । एवमेव रीतिवृत्तिप्रवृत्तीनामप्यभिनयोपयोगिन्याः सम्भाषणक-लायाः (वाग्विद्यायाः) कृतेऽत्रोपयोगित्वं प्रदर्शितम् ।[4]

विष्णुमार्कण्डेयभागवतपुराणेषु हास्यरसस्य नितरामभावः । यदि कुत्र-चित्कथमपि किमपि निदर्शनमुपलभ्यते तदस्याभासमात्रमेव न तु सम्यक्

---

१. अभिमानाद्रतिः सा च परिपोषमुपेयुषी ।
व्यभिचार्यादिसामान्याच्छृङ्गार इति गीयते ॥ अग्निपु० ३३९, ४

२. स्तम्भादिः सात्त्विको वागारम्भो वाचिक आङ्गिकः ।
शरीरारम्भ आहार्यो बुद्ध्यारम्भप्रवृत्तयः ॥
रसादिविनियोगोऽथ कथ्यते ह्यतिमानतः । अग्निपु० ३४२, २-३

३. तत्रैव ३३९, ५१-५४

४. बोधाय एष व्यापारः सुबुद्ध्यारम्भ इष्यते ।
तस्य भेदास्त्रयस्ते च रीतिवृत्तिप्रवृत्तयः ॥ तत्रैव ३३९, ५४
वाग्विद्यासम्प्रतिज्ञाने…। तत्रैव ३४०, १

परिपाकः । हास्यरसस्याभावादिमानि तथैव बौद्धिकव्यायामस्य निमित्तानि यथा खलु दर्शनग्रन्था जायन्ते । सर्गप्रतिसर्गवंशादीनां प्रसङ्गानधीत्य सामाजिको यदा श्रान्त इव जायते तदाऽस्य श्रमः शृङ्गारभक्तिवीरादिरसप्रसङ्गैरपनीयते, परं यद्येतै रसैः सह हास्यरसोऽप्यभविष्यत्तर्हि पुराणानामुपादेयत्वे (काव्यदृष्ट्या) ध्रुवमेव वृद्धिरभविष्यत् ।

पुराणानां पञ्चलक्षणात्मकत्वादत्र सर्गादयो विषया अपि वर्णिताः । एतादृशानां विषयाणां निरूपणेऽत्रेतिहासवर्णनपद्धतिरवलम्बिता । परं महारासादिप्रसङ्गेषु काचिदपरा काव्यवर्णनपद्धितराश्रिता । उभयविधयोरनयोः पद्धत्योस्त्रिष्वेव पुराणेषु स्वल्पमनल्पं वा साङ्कर्यं दृश्यते । अनेन हि तत्तत्प्रकरणेषु निरूपितस्य रसस्य निर्वहणे व्याघातः समुत्पाद्यते ।

यद्यप्येतेषु पुराणेषु रसदोषा अपि यत्र तत्र विलोक्यन्ते परं काव्यसम्पत्समन्विता महनीयाः प्रसङ्गा अप्यत्र पौनःपुन्येन दृष्टिपथमायान्ति । इदानीमेकैकं पुराणमाश्रित्य सविशेषं विचार्यते ।

(१) विष्णुपुराणे स्वशब्दवाच्यताख्यदोषोऽनेकेषु स्थलेषूपलभ्यते । भयभक्तिरसयो (भयातुराः[1] भक्तिमतः[2]) रतिस्थायिभावस्य (रतिप्रियाः)[3] लज्जाव्यभिचारिभावस्य च (लज्जामुपाययौ)[4] शब्दोपात्तत्वेनास्य दोषस्यावकाशो जायते । कुब्जाभिधानां सकामां दासीं प्रेक्ष्य धीरललितप्रकृतेः कृष्णस्याग्रजं बलराममभिलक्ष्य विहितो हासो धीरललितनायकस्य प्रकृतेर्विरुद्धत्वात्प्रकृतिविपर्ययाख्यं दोषमावहति ।[5]

परमस्य पुराणस्य पृथिवीकृतवराहस्तवे[6] देवराजेनेन्द्रेण विहिते लक्ष्मी-

---

१. विष्णुपु० ५, १४, ७

२. तत्रैव १, २०, २४

३. तत्रैव ५, १३, ५९

४. तत्रैव ५, १३, १९

५. आयास्ये भवतीगेहमिति तां प्रहसन् हरिः ।
विससर्ज जहासोच्चै रामस्यालोक्य चाननम् ॥ विष्णुपु० ५, २०, १३

६. नमस्ते पुण्डरीकाक्ष शङ्खचक्रगदाधर ।
मामुद्धरास्मादद्य त्वं त्वत्तोऽहं पूर्वमुत्थिता ॥ विष्णुपु० १, ४, १२

स्तवे[1] प्रह्लादकृताच्युतस्तुतौ[2] च भक्तिरसः सोत्कर्षं विराजते। पञ्चमस्कन्धस्य रासक्रीडाप्रसङ्गे सम्भोगश्रृङ्गारस्योत्कृष्टतमं वर्णनम्।[3] अत्र हि श्रृङ्गाररसोपकारकाणामालम्बनोद्दीपनविभावानां मनोहारि वर्णनम्।[4] कृष्णे च मथुरां प्रति प्रयातुमुद्यते सति तद्विरहविधुराणां गोपीनां वर्णनं भविष्यमाणविप्रलम्भश्रृङ्गारस्य हृदयावर्जकं निदर्शनम्। अत्र हि विप्रलम्भश्रृङ्गारस्य तनुतालज्जात्यागाख्ये द्वे अवस्थे अपि सम्यक् प्रदर्शिते।[5] आभीरैर्निर्जितस्यार्जुनस्य विलापोक्तयः करुणरसस्योत्तमान्युदाहरणानि।[6] वस्तुतोऽस्य पुराणस्य सर्गादयः पञ्चविषया एव प्राधान्येन प्रतिपाद्याः। अस्माच्छृङ्गारादिरसानां निरूपणेऽत्र समुचितमवधानं न प्रदत्तमिति प्रतीयते। तथाप्यत्र केषुचित्स्थलेषूत्तमकाव्योचितभक्तिश्रृङ्गारकरुणरसानामास्वाद उपलभ्यते। एते सन्दर्भा एतत्पुराणमुत्तमकाव्यकोटिमुपनयन्ति। परम् (काव्यदृष्ट्या) नीरसानामपि प्रसङ्गानामत्र सन्निवेशबाहुल्यादिदं पुराणं समष्ट्योत्तमकाव्याभिख्यामवाप्तुं न शक्नोति।

---

१. पद्मालयां पद्मकरां पद्मपत्रनिभेक्षणाम्।
वन्दे पद्ममुखीं देवीं पद्मनाभप्रियामहम्॥ विष्णुपु० १, ९, ११८

२. नमस्ते पुण्डरीकाक्ष नमस्ते पुरुषोत्तम।
नमस्ते सर्वलोकात्मन्नमस्ते तिग्मचक्रिणे॥
नमो ब्रह्मण्यदेवाय गोब्राह्मणहिताय च।
जगद्धिताय कृष्णाय गोविन्दाय नमो नमः॥ तत्रैव १, १९, ६४-६५

३. ततः काञ्चित् प्रियालापैः काञ्चिद्भ्रूभङ्गवीक्षितैः।
निन्येऽनुनयमन्यां च करस्पर्शेन माधवः॥
ताभिः प्रसन्नचित्ताभि गोपीभिस्सह सादरम्।
ररास रासगोष्ठीभिरुदारचरितो हरिः॥ तत्रैव १, १३, ४७-४८

४. कृष्णस्तु विमलं व्योम शरच्चन्द्रस्य चन्द्रिकाम्।
तदा कुमुदिनीं फुल्लामामोदितदिगन्तराम्।
वनराजिं तथा कूजद्भृङ्गमालामनोहराम्।
विलोक्य सह गोपीभिर्मनश्चक्रे रतिं प्रति॥ तत्रैव ५, १३, १४-१५

५. अनुरागेण शैथिल्यमस्मासु व्रजिते हरौ।
शैथिल्यमुपयान्त्याशु करेषु वलयान्यपि॥
गुरूणामग्रतो वक्तुं किं ब्रवीषि न नः क्षमम्।
गुरवः किं करिष्यन्ति दग्धानां विरहवह्निना॥ तत्रैव ५, १८, २९; २२

६. अहोऽति बलवद्दैवं विना तेन महात्मना।
यदसामर्थ्ययुक्तेऽपि नीचवर्गे जयप्रदम्॥ तत्रैव ५, ३८, ३१

(२) मार्कण्डेयपुराणे भयस्य (शत्रुभयकारि)[1] अद्‌भुतस्य (अत्यद्‌भुतम्)[2] च रसयोः शोकस्य (शोकपरिप्लुतः)[3] विस्मयस्य (लज्जाविस्मयदैन्याम्)[4] च स्थायिभावयो हर्षस्य (हर्षमतुलम्)[5] लज्जादैन्ययोः (लज्जाविस्मयदैन्यानाम्)[6] च व्यभिचारिभावयोः शब्दोपात्तत्वात् स्वशब्दवाच्यताख्यदोषस्य प्रसक्तिर्जायते।

अस्मिन् पुराणे श्मशानवर्णनप्रसङ्गतो बीभत्सरसस्यालम्बनोद्दीपनविभावा निपुणं निरूपिताः।[7] शुम्भनिशुम्भादिदैत्यानां वधप्रसङ्गेषु वीररसस्य पुष्टिविधायिका उक्तयो दृश्यन्ते।[8] देवीस्तोत्राख्ये (अष्टाशीतितमे) अध्याये भक्तिरसस्य हृद्यानि निदर्शनान्युपलभ्यन्ते।

पुराणेऽस्मिन् सर्गादयः पञ्चविषया अन्येऽपि च राजधर्मादयः सविशेषं वर्णिताः। अस्मादत्र यत्रकुत्रचिदेव शृङ्गारादिरसानामुदाहरणानि दृग्गोचरीभवन्ति। विविधरसानां निरूपणप्रकारोऽपि न तथा प्रशस्यो यथा खलु विष्णुभागवतपुराणयोर्दृश्यते। कतिचिदेवात्रैतादृशाः प्रसङ्गा य उत्तमकाव्याभिख्यां लब्धुं समर्थाः।

(३) भागवतपुराणे क्रोधाख्यस्थायिभावस्य (रुषा श्वसन्त्युरगीव)[9] अश्रुसात्त्विकभावस्य (साश्रुवदनाम्)[10] हर्षाख्यस्य (जातहर्षः)[11] च व्यभिचारिभावस्य

---

१. मार्कण्डेयपु० ८१, २२
२. तत्रैव ८१, १२
३. तत्रैव ७, ५६
४. तत्रैव १९, २१
५. तत्रैव ८५, ६१
६. तत्रैव १९, २१
७. अग्नेश्चटचटाशब्दो वयसामस्थिपङ्क्तिषु।
बान्धवाक्रन्दशब्दश्च पुल्कसेषु प्रहर्षजः॥
गायतां भूतवेतालपिशाचगणरक्षसाम्।
श्रूयते सुमहान् घोरः कल्पान्त इव निःस्वनः॥ तत्रैव ८, ११६-११७
८. तदागच्छतु शुम्भोऽत्र निशुम्भो वा महासुरः।
मां जित्वा किं चिरेणात्र पाणिं गृह्णातु मे लघु॥ तत्रैव ८२, ७३
बलावलेपादथ चेद् भवन्तो युद्धकाङ्क्षिणः।
तदागच्छत तृप्यन्तु मच्छिवाः पिशितेन वः॥ तत्रैव ८५, २६
९. भागवतपु० ६, १८, १५
१०. तत्रैव १, १७, ३
११. तत्रैव १०, ३५, १२

नामतो ग्रहणात्स्वशब्दवाच्यताख्यदोषः समुपजायते । बलरामस्य पश्यतः कुब्जामभिलक्ष्य प्रोक्तानि कृष्णस्य वचांसि प्रकृतिविपर्ययत्वदोषावहानि[1] यतो हि धीरललितो नायको गुरूणां समक्षमेवंविधानि वचांसि न प्रयुङ्क्ते ।

अस्य पुराणस्य पुरञ्जनोपाख्याने शृङ्गाररसस्यालम्बनोद्दीपनविभावानां मनोहारि वर्णनम् ।[2] आग्नीध्रचरितेऽप्यस्य रसस्य सम्यङ् निरूपणम् ।[3] रासपञ्चाध्याय्यां (दशमस्कन्धस्य, २९-३३ तमा अध्यायाः) सम्भोगविप्रलम्भशृङ्गारयोर्दशानां कामदशानामालम्बनोद्दीपनविभावादीनां हृदयावर्जकानि निदर्शनान्युपलभ्यन्ते ।[4] कृष्णबलरामयोर्व्रजगमनप्रसङ्गे भविष्यमाणविप्रलम्भशृङ्गारस्य

---

१. एवं स्त्रिया याच्यमानः कृष्णो रामस्य पश्यतः ।
मुखं वीक्ष्यानुगानां च प्रहसंस्तामुवाच ह ॥
एष्यामि ते गृहं सुभ्रूः पुंसामाधिविकर्शनम् ।
साधितार्थोऽगृहाणां नः पान्थानां त्वं परायणम् ॥ भागवतपु० १०, ४२, ११-१२

२. त्वदाननं सुभ्रु: सुतारलोचनं
व्यालम्बिनीलालकवृन्दसंवृतम् ।
उन्नीय मे दर्शय वल्गु वाचकं
यद् व्रीडया नाभिमुखं शुचिस्मिते ॥ तत्रैव ४, २५, ३१

हिमनिर्झरविप्रुष्मत्कुसुमाकरवायुना ।
चलत्प्रवालविटपनलिनीतटसम्पदि ॥
नानारण्यमृगव्रातैरनाबाधे मुनिव्रतैः ।
आहूतं मन्यते पान्थो यत्र कोकिलकूजितैः ॥ तत्रैव ४, २५, १८-१९

३. न त्वां त्यजामि दयितं द्विज देवदत्तं
यस्मिन् मनो दृगपि नो न वियाति लग्नम् ।
मां चारुशृङ्ग्यर्हसि नेतुमनुव्रतं ते
चित्तं यतः प्रतिसरन्तु शिवाः सचिव्याः ॥ तत्रैव ५, २, १६

४. सम्भोगशृङ्गारो यथा —
कर्णोत्पलालकविटङ्ककपोलघर्म-
वक्त्रश्रियो वलयनूपुरघोषवाद्यैः ।
गोप्यः समं भगवता ननृतुः स्वकेश-
स्रस्तस्रजो भ्रमरगायकरासगोष्ठ्याम् ॥ तत्रैव १०, ३३, १६

सुष्ठु परिपाकः ।[1] भ्रमरगीताभिधेऽध्यायेऽपि विप्रलम्भस्य सम्यङ् निवेशो व्यधायि ।[2]

कृष्णतिरोभावानन्तरमर्जुनस्य शोकोक्तयोऽपि करुणरसस्योत्कृष्टानि निदर्शनानि ।[3] एवमेव स्वपुत्रं मृतं दृष्ट्वा विलपन्त्या राज्ञ्याः कृतद्युतेर्वचांस्यपि करुणरसोत्पादकानि ।[4]

हिरण्यकशिपुहिरण्याक्षयोर्जन्मप्रसङ्गे भयानको रसः सन्निविष्टः ।[5]

---

१. (कः) अहो विधातस्तव न क्वचिद् दया
संयोज्य मैत्र्या प्रणयेन देहिनः ।
तांश्चाकृतार्थान् वियुनङ्क्ष्यपार्थकं
विक्रीडितं तेऽर्भकचेष्टितं यथा ॥ भागवतपु० १०, ३९, १९

(खः) निवारयामः समुपेत्य माधवं
किं नोऽकरिष्यन् कुलवृद्धबान्धवाः ।
मुकुन्दसङ्गान्निमिषार्धदुस्त्यजाद्
दैवेन विध्वंसितदीनचेतसाम् ॥ तत्रैव १०, ३९, २८

२. अपि बत मधुपुर्यामार्यपुत्रोऽधुनाऽऽस्ते
स्मरति स पितृगेहान् सौम्य बन्धूंश्च गोपान् ।
क्वचिदपि कथा नः किङ्करीणां गृणीते
भुजमगुरुसुगन्धं मूर्ध्न्यधास्यत् कदा नु ॥ तत्रैव १०, ४७, २१

३. नर्माण्युदाररुचिरस्मितशोभितानि
हे पार्थ हेऽर्जुन सखे कुरुनन्दनेति ।
स जल्पितानि नरदेव हृदिस्पृशानि
स्मर्तुर्लुठन्ति हृदयं मम माधवस्य ॥ तत्रैव १, १५, १८

४. नाहं तनूज ददृशे हतमङ्गला ते
मुग्धस्मितं मुदितवीक्षणमाननाब्जम् ।
किं वा गतोऽस्यपुनरन्वयमन्यलोकं
नीतो घृणेन न शृणोमि कला गिरस्ते ॥ तत्रैव १, १४, ५८

५. तस्मिन् प्रविष्टे वरुणस्य सैनिका
यादोगणाः सन्निधयः ससाध्वसाः ।
अहन्यमाना अपि तस्य वर्चसा
प्रधर्षिता दूरतरं प्रदुद्रुवुः ॥ तत्रैव ३, १७, २५

नृसिंहावतारवर्णनेऽद्भुतो [1]रसोऽवधूतोपाख्याने च पिङ्गलाया उक्तिषु च शान्तो रसः[2] शोभनतया प्रस्तुतौ। ब्रह्मकृतविष्णुस्तवे[3] रासपञ्चाध्याय्यां च भक्तिरसः सम्यक् परिपोषितः।[4]

एवमत्र शृङ्गारादिरसा दिङ्मात्रमुदाहृताः। अन्येऽपि वीरादयो रसा यत्र तत्र द्रष्टुं शक्यन्ते। यद्यपि विष्णुमार्कण्डेयपुराणयोरिवैतस्मिन् पुराणेऽपि सर्गादयः पञ्चविषया यतिधर्मादयश्च वर्णिता येन खलु नीरसप्रसङ्गा अप्यत्रापतितास्तथाप्यस्याख्यानोपाख्यानप्रसङ्गेषु सर्वे रसाः प्राचुर्येण सकौशलं समावेशिता उपलभ्यन्ते। अनेनात्र सरसोक्तीनां बाहुल्यं सञ्जातम्। अपि चात्र ये स्वशब्दवाच्यतादयो रसदोषा दृश्यन्ते ते बाहुल्येन प्रयुक्तानामनुप्रासोपमाद्यलङ्काराणां माधुर्यादिगुणानां पाञ्चाल्यादिरीतीनां च मध्येऽन्तर्हिता इव जायन्ते। काव्यस्यात्मभूतो रसोऽत्र प्राधान्येन वर्णितः काव्यशोभाधायका अलङ्काराश्चापि नोपेक्षिताः। एवं सर्वेषामेव काव्यसौन्दर्यवर्धकानां तत्त्वानामत्र शोभनतरसन्निवेशदर्शनादिदं पुराणमुत्तमकाव्यपदवीमधिगन्तुमर्हति।

---

१. दिविस्पृशत्कायमदीर्घपीवर-
ग्रीवोरुवक्षः स्थलमल्पमध्यमम्।
चन्द्रांशुगौरैश्छुरितं तनूरुहै-
र्विष्वग्भुजानीकशतं नखायुधम्॥ भागवतपु० ७, ८, २२

२. सन्तुष्टा श्रद्दधत्येतद् यथालाभेन जीवती।
विहराम्यमुनैवाहमात्मना रमणेन वै॥ तत्रैव ११, ८, ४०

३. तदस्तु मे नाथ स भूरिभागो
भवेऽत्र वान्यत्र तु वा तिरश्चाम्।
येनाहमेकोऽपि भवज्जनानां
भूत्वा निषेवे तव पादपल्लवम्॥ तत्रैव १०, १४, ३०

४. व्रजजनार्तिहन् वीर योषितां
निजजनस्मयध्वंसनस्मित।
भज सखे भवत्किङ्करीः स्म नो
जलरुहाननं चारु दर्शय॥ तत्रैव १०, ३१, ६

## तृतीयोऽध्यायः

# दोषविवेचनम्

अग्निपुराणे दोषगुणरीतीनां भेदा लक्षणानि च सम्यङ् निरूपितानि । विष्णुमार्कण्डेयभागवतपुराणेष्वेषामुदाहरणानि प्राचुर्येणोपलभ्यन्ते । अस्मिन्नध्याये दोषविषये विचारो विहितः । त्रिष्वेतेषु विषयेषु प्रत्येकमवलम्ब्य तदीयसंख्यायां लक्षणेषु चानुक्रमविकासोऽग्निपुराणोक्तदोषादिलक्षणानां चात्र तुलनात्मकमध्ययनं तथैव निष्पादितं यथा पूर्वमलङ्कारस्य रसस्य चाध्याययोः प्रस्तुतम् । अत्र दोषादीनामनुक्रमविकासस्य प्रसङ्गतो वर्णितानामाचार्याणां कालः स एव मतो यः खलु पी० वी० काणेमहोदयेन संस्कृतकाव्यशास्त्रस्येतिहासाख्ये स्वीये ग्रन्थे प्रतिपादितः ।

## दोषशब्दस्यार्थः

हलायुधकोशे दोषशब्दस्य व्युत्पत्तिरेवं प्रदर्शिता — दोषः — दुष्यत्यनेनेति करणे घञ् ।[1] पाणिनीयधातुपाठेऽप्येष धातुर्वैकृत्यार्थकः ।[2] अन्यत्र पाणिनिना दोषशब्दस्य चित्तविरक्तिरित्यप्यर्थः प्रोक्तः ।[3]

## अग्निपुराणवर्तिदोषभागस्य वैशिष्ट्यम्

अग्निपुराणस्य ३४७ तमेऽध्याये दोषाः सविस्तरं व्याख्याताः । अग्निपुराणे दोषस्येदं लक्षणम् —

**उद्वेगजनको दोषः सभ्यानाम्· · · ।**[4]

---

१. जयशङ्करजोशिकृतो हलायुधकोशः, पृ० ३६२

२. पाणिनीयधा० ११८६ दुष् वैकृत्ये

३. वा चित्तविरागे । अ० ६, ४, ९१ । विरागोऽप्रीतता । चित्तं दूषयति, दोषयति वा कामः । सिद्धान्तकौ० ३४६०

४. अग्निपु० ३४७, १

सामाजिकानां चेतसि (रसास्वादनसमये) क्षोभोत्पादको हेतुर्दोष इत्युच्यते।

अग्निपुराणस्य दोषविषयकमिदं मतं दण्डिसम्मतमतेन सह सङ्गच्छते। अग्निपुराणमतानुसारेण दोषः सामाजिकस्य चेतसि क्षोभं समुत्पादयति। अस्या उक्तेरयमाशयः — दोषेण तावत् काव्यस्य सौन्दर्यहानिं विधाय रसस्यापकर्षो विधीयते, समुपजायमानेनानेन रसापकर्षेण सामाजिकस्य मनश्चेखिद्यते। काव्यादर्शमतेनापि दोषः काव्ये सौन्दर्यहानिरूपां विपत्तिमानयति।[1] इयमेव रसस्यापकर्षहेतुः सञ्जायते। वामनस्य दोषलक्षणमप्यग्निपुराणोक्तदोषलक्षणेन सह संवदति। तेन काव्यशोभायाः कर्त्तारो धर्मा गुणा[2] इति स्वीकृत्य गुणानां काव्यशोभाधायकत्वं प्रतिपादितम्। एवमेव गुणविपर्ययात्मानो दोषा[3] इति मत्वा गुणविपरीतस्वभावानां दोषाणां काव्यशोभाविघातकत्वमिति धर्मः प्रोक्तः। इत्थं तन्मतेनापि काव्यशोभाविघातेन रसापकर्षो जायते।

अग्निपुराणे पूर्वं सर्वे दोषा वक्तृवाचकवाच्यभेदात् सप्त प्रकीर्तिताः। एषु सन्दिहानत्वादयश्चत्वारो दोषा वक्तृनिष्ठाः, पदवाक्यगतौ द्वौ भेदौ वाचकनिष्ठावन्तिमश्च वाच्याख्यो भेद एक एव। एवमिमे सर्वे सम्भूय सप्तसंख्याकाः।[4]

**(कः) वक्तृदोषाः** — इमे भेदा कवौ विद्यमानान् दोषान् यद्वा तदीया सामर्थ्यमाश्रित्य प्रतिपादिताः। एते चत्वारः —

१. सन्दिहानत्वम्   २. अविनीतत्वम्
३. अज्ञत्वम्   ४. अज्ञातृत्वं च।[5]

एषां स्वरूपमुदाहरणानि वा नात्र विशदीकृतानि।

**(खः) वाचकदोषाः** — इमे खलु द्विविधाः —

१. पदगताः   २. वाक्यगताश्च।

असाधुत्वाप्रयुक्तत्वाख्यौ द्वौ दोषौ केवलं पदगतावेव। छान्दसत्वाविस्पष्टत्वे कष्टत्वासामयिकत्वग्राम्यत्वानि च दोषाः पदेषु वाक्येषु चोभयत्रोपलभ्यन्ते। अत्राविस्पष्टत्वाख्यदोषस्य गूढार्थता विपर्यस्तार्थता संशयितार्थता चेति

---

१. दोषा विपत्तये तत्र···॥   काव्याद० ३, १२५
२. काव्याल० सू० ३, १, १
३. तत्रैव २, १, १
४. अग्निपु० ३४७, १
५. तत्रैव ३४७, २

त्रयो दोषा निगदिताः परं वस्तुत इमे चत्वार एव स्वतन्त्रा दोषाः । अस्मादत्रैतेषु पञ्चसु दोषेषु त्रयो गूढार्थतादयोऽपि दोषाः संयोजिताः । एवं सर्वेषां वाचकदोषाणां संख्या सम्भूय दश जायते ।[1]

**(गः) वाच्यदोषाः** — इमे द्विप्रकाराः —

१. साधारणाः २. प्रातिष्ठिकाः ( वैशेषिकाः) च ।

साधारणा दोषाः सदैव सर्वत्र च (नित्यदोषत्वेन) तिष्ठन्ति प्रातिष्ठिकाश्च क्वचित्क्वचिदेव (अनित्यदोषत्वेन) प्रतिष्ठन्ते । क्रियाभ्रंशादयो दोषाः सर्वेषु स्थलेषु दोषा एव मन्यन्ते परमसिद्धत्वादीनां दोषाणां केषुचित्स्थलेषु गुणत्वेन परिणतिरुपलभ्यते ।

१. साधारणदोषास्तु पञ्चसंख्याकाः —

१. क्रियाभ्रंशः २. कारकभ्रंशः
३. विसन्धिः ४. पुनरुक्तता
५. व्यस्तसम्बन्धिता च ।[2]

२. सप्त चैते प्रातिष्ठिकदोषाः —

१. असिद्धत्वम् २. विरुद्धत्वम्
३. अनैकान्तिकता ४. सत्प्रतिपक्षत्वम्
५. कालातीतत्वसङ्करः ६. पक्षे सपक्षे च नास्तित्वम्
७. विपक्षेऽस्तित्वं च ।[3]

अन्यच्च समासादिदुर्गमप्रसङ्गेष्वेकादशभिदा निरर्थकता, व्युत्क्रमत्वं विभक्तिदोषः संख्यादोषो लिङ्गदोषश्चेमे पञ्चापि प्रातिष्ठका दोषाः ।[4] सम्भूता· नामेतेषां संख्या द्वादश सञ्जायते ।

वस्तुतः पूर्वोक्ताश्चत्वारो वक्तृदोषाः कवेरसामर्थ्यद्योतका अतस्ते कवेरेव दोषाः न तु काव्यस्य। अतस्तेषां स्थानं काव्यदोषाणां मध्ये भवितुं नार्हति। वाचकदोषा दश, ये च पञ्चभिः साधारणैर्दोषैर्द्वादशभिश्च प्रातिष्ठिकदोषैः सह सम्भूय सप्तविंशतिसंख्याका जायन्ते ।

---

१. अग्निपु० ३४७, ३-१२

२. तत्रैव ३४७, १४

३. तत्रैव ३४७, २२-२३

४. तत्रैव ३४७, २४, २८; २९

## अग्न्यादिपुराणेषु दोषाणां लक्षणानि प्रयोगाश्च

अग्निपुराणस्य ३४७ तमेऽध्याये ये दोषा वर्णितास्ते पूर्वं प्रदर्शिताः। एषु चत्वारः सन्दिहानत्वादयो वक्तृदोषा असिद्धत्वादयो निरर्थकतादयश्चापरे दोषा अस्मिन् पुराणे न सम्यग् लक्षिताः। दशानामसाधुत्वादिपदवाक्यगतानां दोषाणां पञ्चानां च क्रियाभ्रंशादीनां वाच्यदोषाणामेव लक्षणान्यत्रोपलभ्यन्ते। अस्मादस्मिन् दोषप्रकरणे पञ्चदशसंख्याका इमे दोषा एव सविशेषं विचारिताः। अग्निपुराणोक्तासाधुत्वादिदोषलक्षणानां काव्यालङ्कारकाव्यादर्शसरस्वतीकण्ठाभरणोक्तैस्तत्तद्दोषलक्षणैः सह तुलनात्मकमध्ययनं विधायैतेषु कतिपया विष्ण्वादिपुराणत्रयाद् दिङ्मात्रमुदाहृताः। एवमेव कारकभ्रंशादिदोषलक्षणान्तं तुलनात्मकमध्ययनं प्रस्तुत्य तेषामुदाहरणानि प्रदर्शितानि।

**१. असाधुत्वम् — शब्दशास्त्रविरुद्धत्वमसाधुत्वं विदुर्बुधाः॥**[1]

यत्र व्याकरणशास्त्रप्रतिपादितनियमानामुल्लङ्घनं दृश्यते तत्रासाधुत्वदोषः। काव्यालङ्कारस्य शब्दहीनदोषेण सहास्य दोषस्य साम्यम्।[2] काव्यादर्शमतेन यत्र पदप्रयोगे शब्दानुशासनमार्गः (व्याकरणम्) नावलम्ब्यते किं वा स शिष्टैर्जनैर्न प्रयुज्यते स शब्दहीनम्।[3] सरस्वतीकण्ठाभरणोक्तमसाधुदोषलक्षणमनेन लक्षणेन सह सर्वथा संवदति।[4]

**२. अप्रयुक्तत्वम् — व्युत्पन्नैरनिबद्धत्वमप्रयुक्तत्वमुच्यते।**[5]

यस्य प्रयोगो विद्वद्भिः स्वीयासु रचनासु न विधीयते तदप्रयुक्तत्वम्। बहवः शब्दा व्याकरणानुमोदिताः सन्तोऽपि कविभिर्न प्रयुज्यन्ते। यद्येतादृशा शब्दाः कुत्रचित्प्रयुज्येरन् तर्ह्यप्रयुक्तत्वदोषः प्रसज्यते। सरस्वतीकण्ठाभरणोक्तलक्षणमनेन सर्वथा सङ्गच्छते।[6]

---

१. अग्निपु० ३४७, ४

२. सूत्रकृत्पादकारेष्टप्रयोगाद् योऽन्यथा भवेत्।
तमाप्तश्रावकाः सिद्धेः शब्दहीनं विदुर्यथा॥ काव्याल० ४, २२

३. शब्दहीनमनालक्ष्य लक्ष्यलक्षणपद्धतिः।
पदप्रयोगोऽशिष्टेष्टः शिष्टेष्टस्तु न दुष्यति॥ काव्याद० ३, १४८

४. शब्दशास्त्रविरुद्धं यत्तदसाधु प्रचक्षते। सरस्वतीक० १, ७

५. अग्निपु० ३४७, ५

६. कविभिर्न प्रयुक्तं यदप्रयुक्तं तदुच्यते॥ सरस्वतीक० १, ७

**३. छान्दसत्वम् — छान्दसत्वं न भाषायाम् · · · ।**[1]

लोके यदा वैदिकप्रयोगो विधीयते तदा छान्दसत्वदोषः। अन्येषु काव्यालङ्कारादिषु नास्य लक्षणं दृश्यते।

**४- अविस्पष्टम् — · · · अविस्पष्टमबोधतः।**[2]

यत्र पदस्यार्थः सुबोधो न स्यात्तत्राविस्पष्टत्वदोषः। यत्र (दूरसम्बन्धेन) व्यवहितत्वादर्थः सुविशदं न प्रतीयत इतिप्रकारकं क्लिष्टदोषस्य काव्यालङ्कारे यल्लक्षणं प्रोक्तं तदनेन लक्षणेन सह संवदति।[3] एवमेव सरस्वतीकण्ठाभरणेऽपि यत्र कस्यचित्पदस्यार्थो दूरसम्बन्धाच्चिरेण ज्ञायते तत्र क्लिष्टमिति प्रोक्तम्।[4] अस्मिन् क्लिष्टदोषलक्षणेऽग्निपुराणोक्ताविस्पष्टत्वदोषलक्षणे चार्थसाम्यम्।

**५. गूढार्थता — · · · · गूढार्थतेति सा ॥**
**यत्रार्थो दुःखसंवेद्यः · · · ।**[5]

यत्र पदानामर्थो दुर्बोधः स्यात्तत्रायं दोषः। काव्यालङ्कारे नास्य लक्षणं परं तत्र दुर्बोधाः कतिपये शब्दा गूढार्थदोषस्य निदर्शनत्वेन प्रदर्शिताः।[6] सरस्वतीकण्ठाभरणमतेनायं दोषोऽप्रसिद्धार्थकानां पदानां प्रयोगाज्जायते।[7]

**६. विपर्यस्तार्थता — · · · · विपर्यस्तार्थता पुनः।**
**विवक्षितान्यशब्दार्थप्रतिपत्तिमलीमसा ॥**
**अन्यार्थत्वासमर्थत्वे एतामेवोपसर्पतः ॥**[8]

यत्राभीष्टार्थाद् विपरीतस्यान्यस्यार्थस्य मलिना (अस्फुटा) प्रतीतिर्जायते तत्र विपर्यस्तार्थता। अन्यार्थत्वासमर्थत्वदोषयोरस्यामेवान्तर्भावः। सरस्वतीकण्ठा-

---

१. अग्निपु० ३४७, ६

२. तत्रैव ३४७, ६

३. क्लिष्टं व्यवहितं विद्यात्···। काव्याल० १, ४०

४. दूरे यस्यार्थसंवित्तिः क्लिष्टं नेष्टं हि तत् सताम्। सरस्वतीक० १, ११

५. अग्निपु० ३४७, ७-८

६. असितर्तिभुगद्रिक्षित् स्वः कितां पतिरद्रिदृक्।
अमीभिः शुभ्रदृग्वृष्टेर्द्विषो जेघ्नीयिषीष्ट वः ॥ काव्याल० १, ४६ (पादटि०)

७. गूढार्थमप्रसिद्धार्थं प्रयोगं ब्रुवते बुधाः ॥ सरस्वतीक० १, ११

८. अग्निपु० ३४७, ८

भरणोक्तं विपरीतदोषलक्षणमेतेन लक्षणेनांशतः संवदति ।[1]

अन्यार्थस्य नात्र पुराणे किमपि लक्षणम् । असमर्थत्वस्य चेदं लक्षण-मुपलभ्यते —

**असमर्थत्वम् — इष्टव्याघातकारित्वं हेतोः स्यादसमर्थता ।**[2]

यस्य पदस्यार्थेऽभीष्टार्थबाधकताऽवतिष्ठते तत्रासमर्थत्वदोषः । सरस्वती-कण्ठाभरणोक्तमेतद्दोषलक्षणमप्येतादृगेव ।[3]

**७. संशयितार्थता — सन्दिह्यमानवाच्यत्वमाहुः संशयितार्थताम् ।।**[4]

यस्य पदस्य वाच्यार्थः सन्दिग्धस्तत्र संशयितार्थता । काव्यालङ्कारमतेन यत्र विशेषधर्मस्यानुदाहृतेः सन्देहो जायते तत्र ससंशयम् ।[5] यत्र निश्चयार्थं प्रयुक्तानि वचांसि सन्देहं जनयन्ति तत्र ससंशय इति काव्यादर्शमतम् ।[6] सरस्वती-कण्ठाभरणोक्तलक्षणमप्येतादृगेव ।[7]

**८. कष्टत्वम् — असुखोच्चार्यमाणत्वं कष्टत्वम् . . . ।**[8]

यत्र पादानामुच्चारणेऽसुखमनुभूयते तत्र कष्टत्वम् । सरस्वतीकण्ठाभरण-मतेन श्रुतेरसुखदं कष्टत्वदोषजनकं जायते ।[9]

**९. असामयिकता— . . . समयाच्युतिः ।।**
**असामयिकताऽन्नेयामेतां च मुनयो जगुः ।**[10]

---

१. विपरीतं विरुद्धार्थप्रकल्पनमिहोच्यते । सरस्वतीक० १, १३

२. अग्निपु० ३४७, २२

३. असङ्गतं पदं यत्तदसमर्थमिति स्मृतम् । सरस्वतीक० १, १०

४. अग्निपु० ३४७, ९

५. श्रुतेः सामान्यधर्माणां विशेषस्यानुदाहृतेः ।
अप्रतिष्ठं यदेकत्र तज्ज्ञानं संशयं विदुः ।।
ससंशयमिति प्राहुस्ततस्तज्जननं वचः । काव्याल० ४, १७-१८

६. निर्णयार्थं प्रयुक्तानि संशयं जनयन्ति चेत् ।
वचांसि दोष एवासौ ससंशय इति स्मृतः ।। काव्याद० ३, १३९

७. न यत्पदं निश्चयकृत्सन्दिग्धमिति तद्विदुः । सरस्वतीक० १, १८

८. अग्निपु० ३४७ १०

९. पदं श्रुतेरसुखदं कष्टमित्यभिशब्दितम् । सरस्वतीक० १, ८

१०. अग्निपु० ३४७, १०-११

कविसमयाद् भ्रंशनमेवासामयिकता। एषा च काव्ये न प्रयोक्तव्येति काव्यमर्मज्ञैः प्रोक्तम्। अन्येषु काव्यालङ्कारादिषु नास्याः किमपि लक्षणम्।

**१०. ग्राम्यत्वम् — ग्राम्यता तु जघन्यार्थप्रतिपत्तिः खलीकृता।[1]**

दुर्वचनोपेता जुगुप्सितार्थप्रतीतिकृदुक्तिर्ग्राम्यता। सरस्वतीकण्ठाभरणे तु प्रकारान्तरेण ग्राम्यतादोषो व्याख्यातः।[2]

इदानीमेतेषु वाचकदोषेषु कतिपयदोषाणां दिङ्मात्रमुदाहरणानि प्रस्तूयन्ते—

**(कः) असाधुत्वम् — शब्दशास्त्रविरुद्धत्वमसाधुत्वं विदुर्बुधाः॥[3]**

मार्कण्डेयपुराणे तीर्थयात्रार्थं गतस्य बलदेवस्य पूजावर्णनम्—

**मत्तोऽयमिति मन्वानाः समुत्तस्थुस्त्वरान्विताः।**
**पूजयन्तो हलधरमृते तं सूतवंशजम्॥[4]**

अन्यारादितरर्तेदिगित्यादिपाणिनीयसूत्रेणर्तेयोगे पञ्चमी प्रोक्ता[5] परमेनां विशेषविधिमुत्सृज्यात्र द्वितीयायाः प्रयोगो विहितः। अस्मादत्रासाधुत्वदोषः प्रसज्यते।

भागवतपुराणस्य सुद्युम्नकथाप्रसङ्गे तस्य पूर्वजानामुत्पत्तिवर्णनम्—

**तस्य नाभेः समभवत्पद्मकोशो हिरण्मयः।**
**तस्मिञ्जज्ञे महाराज स्वयम्भूश्चतुराननः॥[6]**

जनिकर्तुः प्रकृतिरितिपाणिनीयसूत्रेण जनेः कर्तुः प्रकृतेरपादानसंज्ञा प्रोक्ता[7] तत्र च पञ्चमी निर्दिष्टा परमत्र सप्तम्याः प्रयोगः। अस्मादस्य प्रयोगस्य व्याकरणविरुद्धत्वादत्रासाधुत्वं दोषः।

**(खः) छान्दसत्वम् — छान्दसत्वं न भाषायाम्...।[8]**

---

१. अग्निपु० ३४७, ११
२. अश्लीलामङ्गलघृणावदर्थं ग्राम्यमुच्यते। सरस्वतीक० १, १४
३. अग्निपु० ३४७, ४
४. मार्कण्डेयपु० ६, २८
५. अ० २, ३, २९
६. भागवतपु० ९, १, ९
७. अ० १, ४, ३०
८. अग्निपु० ३४७, ६

भागवतपुराणे मङ्गलाचरणम्—

**तेजोवारिमृदां यथा विनिमयो यत्र त्रिसर्गोऽमृषा ।**
**धाम्ना स्वेन सदा निरस्तकुहकं सत्यं परं धीमहि ॥**[१]

अत्र धीमहीति वैदिकं रूपम् । लोके ध्यायते लट्युत्तमपुरुषस्य बहुवचने ध्यायाम इति रूपं स्यात् ।[२] वैदिकनियमास्तु लोके न प्रयुज्यन्ते । अतएवात्र छान्दसत्वदोषः ।

**(गः) कष्टत्वम् — असुखोच्चार्यमाणत्वं कष्टत्वम्... ॥**[३]

विष्णुपुराणे लक्ष्मीस्तुतिप्रसङ्गः —

**प्रसीद देवि पद्माक्षि मास्मांस्त्याक्षीः कदाचन ॥**[४]

अत्र पदानामसुखेनोच्चार्यमाणत्वात्कष्टत्वम् ।

भागवतपुराणे सुदामाख्यो ब्राह्मणः कृष्णानुग्रहमनुस्मरति—

**किञ्चित्करोत्युर्वपि यत् स्वदत्तं**
**सुहृत्कृतं फल्ग्वपि भूरिकारी ।**
**मयोपनीतां पृथुकैकमुष्टिं**
**प्रत्यग्रहीत् प्रीतियुतो महात्मा ॥**[५]

अत्रापि केषाञ्चित्पदानामसुखोच्चार्यमाणत्वात्कष्टत्वदोषः ।

**(घः) ग्राम्यत्वम् — ग्राम्यता तु जघन्यार्थप्रतिपत्तिः खलीकृता ॥**[६]

भागवतपुराणे कृष्णस्य स्वपत्नीभिः सार्धं जलविहारवर्णनम् —

**ताः क्लिन्नवस्त्रविवृतोरुकुचप्रदेशाः**
**सिञ्चन्त्य उद्धृतबृहत्कबरप्रसूनाः ।**
**कान्तं स्म रेचकजिहीरषयोपगुह्य**
**जातस्मरोत्सवलसद्वदना विरेजुः ॥**[७]

---

१. भागवतपु० १, १, १

२. मुनिलावण्यविजयः — धातुरत्नाकरः (३० ध्यै चिन्तायाम्—ध्यायामः ...), पृ० २० प्रथमं संस्करणम् (जैन प्रकाशक सभा, राजनगर, अहमदाबाद)

३. अग्निपु० ३४७, १०

४. विष्णुपु० १, ६, १३३

५. भागवतपु० १०, ८१, ३५

६. अग्निपु० ३४७, ११

७. भागवतपु० १०, ६०, १०

अत्र क्लिन्नवस्त्रविवृतोरुकुचप्रदेशाः (क्लिन्नेभ्यो वस्त्रेभ्यो विवृता उरुकुचप्रदेशा यासां तास्तथाभूताः) इति विशेषणेन ग्राम्यार्थप्रतीतिः। रेचकजिहीरषयोपगुह्य जातस्मरोत्सवलसद्वदना इति वाक्यांशे गुह्यजातस्मरोत्सवलसद्वदनाः (गुहये गुहयेन्द्रिये जातः प्रादुर्भूतो यः स्मरस्तस्योत्सवेन हर्षेण लसन्ति राजमानानि वदनानि मुखानि यासां तास्तथाभूताः) इति भागस्यानभीष्टोऽपरोऽपि ग्राम्योऽर्थो व्यज्यते।

अग्निपुराणे पञ्चेमे वाच्यदोषाः (अर्थदोषाः) संख्याताः —

१. क्रियाभ्रंशः २. कारकभ्रंशः ३. विसन्धिः ४. पुनरुक्तत्वम् ५. व्यस्तसम्बन्धता च।[1]

## १. क्रियाभ्रंशः

**अक्रियत्वं क्रियाभ्रंशो…।**[2]

यत्र क्रियाया अभावस्तत्र क्रियाभ्रंशः। काव्यालङ्कारादिषु नायं दोषो विवेचितः।

भागवतपुराणे रासलीलावर्णनम् —

**ताः समादाय कालिन्द्या निर्विश्य पुलिनं विभुः।**
**विकसत्कुन्दमन्दारसुरभ्यनिलषट्पदम् ॥**[3]

अत्र पुलिनं निर्विश्य कृष्णः किमकरोदिति तु न केनचित् क्रियापदेनोक्तम्। अनेनात्रोपविवेशेति क्रियापदस्य भ्रंशनात् क्रियाभ्रंशदोषः प्रसज्यते।

## २. कारकभ्रंशः

**…भ्रष्टाकारकता पुनः।**
**कर्त्रादिकारकाभावः… ॥**[4]

यत्र हि कर्त्रादिकारकाणामभावो दृश्यते तत्र कारकभ्रंशाख्यो दोषो जायते।

---

१. अग्निपु० ३४७, १४
२. तत्रैव ३४७, १५
३. भागवतपु० १०, ३२, ११
४. अग्निपु० ३४७, १५

भागवतपुराणे राक्षसभावमापन्नं कल्माषपादं नृपं ब्राह्मणी स्वपतिमुन्मुचयितुमेवमभिदधाति—

**तस्य साधोरपापस्य भ्रूणस्य ब्रह्मवादिनः ।**
**कथं वधं यथा बभ्रोर्मन्यते सन्मतो भवान् ॥**[1]

अत्र कथं वधं यथा बभ्रोर्मन्यते सन्मतो भवानिति याक्ये कर्मपदस्याभावः । अत्रोचितमसाधु वेति कर्मपदमपेक्षयते । एवमत्र कर्मकारकाभावात्कारकभ्रंशदोषः ।

## ३. विसन्धिः

**···विसन्धिः सन्धिदूषणम् ॥**[2]

सन्धेर्दोष एव विसन्धिः । काव्यादर्शमतेनापि पदेष्वसन्धानमेव विसन्धिदोषः ।[3] सरस्वतीकण्ठाभरणोक्तलक्षणमप्यग्निपुराणोक्तलक्षणेन सह संगच्छते ।[4]

विष्णुपुराणे—

**पौर्णमासी तथा ज्ञेया अमावास्या तथैव च ।**[5]

अत्र ज्ञेया अमावास्येति पदयोर्दीर्घसन्ध्यभावाद् विसन्धिदोषः ।

मार्कण्डेयपुराणे—

**नमस्ते ऋक्स्वरूपाय सामरूपाय ते नमः ।**[6]

अत्रैक्सन्ध्यभावाद् विसन्धिदोषः ।

भागवतपुराणे—

**वासुदेवे भगवति आत्मभावं दृढं गतः ।**[7]

अत्रापि यणसन्ध्यभावाद्विसन्धिः ।

---

१. भागवतपु० ९, ९, ३१

२. अग्निपु० ३४७, १५

३. न संहितां विवक्षामीत्यसन्धानं पदेषु यत् ।
तद्विसन्धीति निर्दिष्टं न प्रगृह्यादिहेतुकम् ॥ काव्याद० ३, १५९

४. विसंहितो विरूपो वा यस्य सन्धिर्विसन्धि तत् । सरस्वतीक० १, २२

५. विष्णुपु० २, ८, ८२

६. मार्कण्डेयपु० ७५, २

७. भागवतपु० २, ४, ४

## ४. पुनरुक्तत्वम्

पुनरुक्तत्वमाभीक्ष्ण्यादभिधानम् · · · ।[१]

यत्र कस्यचिद्विषयस्य पुनः पुनः कथनं तत्र पुनरुक्तत्वम् । सरस्वतीकण्ठाभरणोक्तपुनरुक्तिमद्दोषस्याप्येतादृशमेव तात्पर्यम् ।[२]

भागवतपुराणे विरहातुराणां गोपीनां वर्णनम्—

गत्यानुरागस्मितविभ्रमेक्षिते-
मनोरमालापविहारविभ्रमैः ।
आक्षिप्तचित्ताः प्रमदा रमापते-
स्तास्ता विचेष्टा जगृहुस्तदात्मिकाः ॥
गतिस्मितप्रेक्षणभाषणादिषु
प्रियाः प्रियस्य प्रतिरूढमूर्तयः ।
असावहं त्वित्यबलास्तदात्मिका
न्यवेदिषुः कृष्णविहारविभ्रमाः ॥[३]

अत्र प्रथमे श्लोके तदात्मिका इति पदस्य प्रयोगं विधाय द्वितीये श्लोकेऽपि तत्पुनः प्रयुक्तम् । अस्मादत्र शब्दपुनरुक्तिदर्शनात्पुनरुक्तत्वदोषः । यदि द्वितीयश्लोकस्थस्य तदात्मिका इति पदस्य स्थाने पुनः पुन इति प्रयोग स्यात्तदैष दोषो न स्यात् ।

## ५. व्यस्तसम्बन्धता

व्यस्तसम्बन्धता सुष्ठु सम्बन्धो व्यवधानतः ।[४]

यत्र केनचिद् व्यवधानेन पदानां पारस्परिकसम्बन्धस्य न सम्यङ् निर्वाहस्तत्र व्यस्तसम्बन्धता । काव्यालङ्कारादिषु नास्य लक्षणम् ।

भागवतपुराणे व्रजवनितानां विलापदशावर्णनम्—

एवं ब्रुवाणा विरहातुरा भृशं
व्रजस्त्रियः कृष्णविषक्तमानसाः ।

---

१. अग्निपु० ३४७, १७
२. पदं पदार्थश्चाभिन्नौ यत्र तत्पुनरुक्तिमत् ॥ सरस्वतीक० १, २२
३. भागवतपु० १०, ३०, २-३
४. अग्निपु० ३४७, १९

विसृज्य लज्जां रुरुदुः स्म सुस्वरं
गोविन्द दामोदर माधवेति ॥[1]

अत्र सुस्वरमिति पदस्य विसृज्य लज्जां रुरुदुः स्मेति वाक्येन सह सुष्ठु सम्बन्धः। यतो हि विरहार्तजनानां विलापोक्तयो न मधुरा भवन्ति। सुस्वरमिति पदस्य स्थाने यदि सस्वरमिति सस्वनमिति वा पाठः स्यात्तर्हि पदसम्बन्धनिर्वाहः सम्यग् भवेत्।

## समीक्षणम्

अग्निपुराणे गुणरीतय इव दोषा अपि सलक्षणं न लक्षिताः। उदाहरणानामसद्भावाद्दोषाणां स्वरूपं सुविशदं न ज्ञायते। अत्र वर्णितानां दोषाणां स्वरूपस्य सम्यग्ज्ञानं काव्यालङ्कारादिग्रन्थानां साहाय्येनैव सञ्जायते यतो हि तत्रेमे सलक्षणमुदाहृताः।

काव्यशास्त्रविद्भिरनेकैराचार्यैर्दोषस्वरूपं विशदीकृतम्। दोषा विपत्तये तत्रेति दण्डिना,[2] गुणविपर्ययात्मनो दोषा इति वामनेन,[3] हेयाः काव्ये कवीन्द्रैर्यैं इति भोजराजेन[4] रसापकर्षका दोषा इति च विश्वनाथेन[5] दोषविषये निगदितम्। इमानि सर्वाणि लक्षणानि दोषाः खलु काव्यापकर्षहेतव इत्येवाभिसूचयन्ति। यद्यप्युद्वेगजनको दोषः सभ्यानामित्यग्नि[6] पुराणोक्तदोषलक्षणस्यापीदमेव तात्पर्यं तथापि पुराणकारेणैतल्लक्षणं विलक्षणरीत्या प्रस्तुतम्। तन्मतेन दोषेण काव्ये योऽपकर्षो जायते स तदध्येतॄन् सामाजिकानुद्वेजयति। सभ्येषु चोद्विग्नेषु सत्सु तस्य (दुष्टस्य) काव्यस्य महत्त्वं[6] स्वत एव न्यूनीभवति। एवं पुराणकारमतेनापि दोषः काव्यापकर्षजनकः।

यथा भामहेन दण्डिना च नित्यानित्यभेदेन दोषा द्विधा विभक्तास्तथैवाग्निपुराणकारेणापि वाच्यदोषा द्विविधाः प्रकीर्तिताः। पूर्वं तेन क्रियाभ्रंशादयो नित्यदोषा वर्णिता अनन्तरं चाद्धिसत्वगूढार्थतादयोऽनित्यदोषा विचारिताः।

---

१. भागवतपु० १०, ३९, ३१
२. काव्याद० ३, १२५ (रङ्गाचार्यस्य प्रभाख्यवृत्तौ ३७४ तमे पृष्ठे पादटिप्पण्यामधिकः पाठः)
३. काव्याल० सू० २, १, १
४. सरस्वतीक० १, ३
५. साहित्यद० ७, १
६. अग्निपु० ३४७, १

तन्मतेन काव्येष्वसिद्धत्वादयो दोषा दुरूहस्थलेषु विद्यमाना गूढार्थता च दोषभावं नाप्नुवन्ति ।[1] अत्र नित्यदोषाणां साधारण इति शब्देनानित्यदोषाणां च प्रातिष्ठिक इति शब्देन ग्रहणम् ।[2]

क्रियाकारकभ्रंशाख्यौ दोषौ काव्यालङ्कारे काव्यादर्शे सरस्वतीकण्ठाभरणे च नोपलभ्यन्ते । अग्निपुराणेनैवैतौ प्रथमं निर्दिष्टौ पश्चाद्वर्तिनि साहित्यदर्पणे न्यूनपदत्वाख्यो यो दोषस्तेन सार्धमनयोः सादृश्यम् ।[3]

भामहेन दण्डिना वामनेन च ये देशकालकलालोकन्यायागमविरोधिनो दोषा मतास्तेष्वागमविरोधिदोषादृते नान्येषामत्र पुराणे वर्णनम् । आगमविरोधिदोषस्यात्रासामयिकतेति नाम । समयाच्युतिरेवात्रासामयिकतेति नाम्ना व्यपदिष्टा ।[4] समयस्य च लक्षणम्—कवीनां समुदाचारः समयो नाम गीयत[5] इति प्रोक्तम् । अत्र कविशब्देन विभिन्नसैद्धान्तिकानां ग्रहणम् । अत्र छेदादयः कतिपये च शैवादिसिद्धान्ता अपि निर्दिष्टाः । वस्तुत एतत्सर्वं सुविचार्य न सङ्कलितं यतो हि प्रसङ्गस्यास्य पठनेनैतेषां सिद्धान्तानां नामान्येव ज्ञायन्ते न त्वेतेषां स्वरूपाणि । अनेन पुराणकारस्य सङ्ग्राहकप्रवृत्तिरेवावगम्यते ।

अस्मिन् पुराणे सन्दिहानत्वादयो ये चत्वारो वक्तृदोषाः प्रोक्ता न ते काव्यदोषपदवीमर्हन्ति । यदि कविगताः सन्दिहानत्वाविनीतत्वादयो दोषाः परम्परया काव्यगता जायन्ते तर्ह्यसत्यवादित्वादयः कविगता इतरे दोषा अपि वक्तृदोषेषु कथं न स्वीक्रियन्ते ? तदानीमिमे दोषाश्चत्वार एव न स्युरपित्वेतेषां संख्याऽनन्ता स्यात् । अपि चैतेषां दोषाणामुदाहरणाभावात्स्वरूपं सुविशदं न ज्ञायते ।

निमित्तपरिभाषायामर्थसंस्पर्शि वाचकमिति[6] वाचकलक्षणमपि दुष्करमवगन्तुम् । अन्यार्थत्वासमर्थत्वदोषौ विपर्यस्तार्थतायामन्तर्भावितौ । अनयोरन्यार्थत्वं तु न लक्षितमसमर्थत्वं चापि क्रमप्राप्ते स्थलेऽनाख्याय दूरमग्रे व्याख्यातम् ।

---

१. (१) असिद्धत्वं विरुद्धत्वमनैकान्तिकता तथा ।
काव्येषु परिपद्यानां न भवेदरुन्तुदम् ॥ अग्निपु० ३४७, २२-२४

(२) दुःखाकरोति दोषज्ञान् गूढार्थत्वं न दुष्करे । तत्रैव ३४७, २५

२. दोषः साधारणः प्रातिष्ठिकोऽर्थस्य स तु द्विधा । तत्रैव ३४७, १३

३. साहित्यद० ७, ५

४. अग्निपु० ३४७, १०

५. अग्निपु० ३४७, ३०

६. अग्निपु० ३४७, २

अस्मिन् पुराणे यथालङ्काररसगुणरीतयोऽनालोचनात्मकप्रकारेण वर्णितास्तथैवायं दोषविषयोऽपि। परमत्र दोषलक्षणादिकतिपयविषया निपुणं विचारिताः।

विष्णुमार्कण्डेयभागवतपुराणेषु विसन्धिच्छान्दसत्वदोषयोः प्राचुर्यम्। भागवतपुराणे ह्येतयोर्मात्रा भूयिष्ठा। भागवतपुराणस्य रासलीलासदृशप्रेमप्रसङ्गेषु क्वचित्क्वचिद् ग्राम्यतादोषोऽपि समापतति।[1]

अग्निपुराणे रसदोषा नाख्याताः। अतएवोपरिष्टात् तेषामुदाहरणानीतरपुराणेभ्यः समादाय न प्रदर्शितानि। वस्तुतस्त्रिष्वेव पुराणेषु स्वशब्दवाच्यत्वाख्यो रसदोषो यत्र तत्रोपलभ्यते। अत्र दिङ्मात्रमुदाह्रियते—

विष्णुपुराणे रासक्रीडावर्णनम्—

**काचित्कृष्णेति कृष्णेति प्रोच्य लज्जामुपाययौ।**
**ययौ च काचित् प्रेमान्धा तत्पार्श्वमविलम्बितम्॥**[2]

अत्र लज्जाव्यभिचारिभावस्य स्वशब्दवाच्यत्वम्। लज्जामुपाययावित्यस्य स्थाने जाता नताननेति पाठो युक्तः स्यात्।

मार्कण्डेयपुराणे जैमिनिर्महाभारतं जिज्ञासति—

**एवमुक्तस्तदा तेन मार्कण्डेयेन धीमता।**
**प्रत्युवाचर्षिशार्दूलो विस्मयोत्फुल्ललोचनः॥**
**अत्यद्भुतमिदं ब्रह्मन् खगवागिव मानुषी।**[3]

अत्र विस्मयस्थायिभावस्याद्भुतरसस्य च स्वशब्दवाच्यत्वम्। अत्र विस्मयोत्फुल्ललोचन इत्यस्य स्थाने प्रकामं फुल्ललोचन इत्यत्यद्भुतमित्यस्य च स्थानेऽलौकिकमिदमिति पाठौ सङ्गतौ स्याताम्।

भागवतपुराणे स्वपत्नीनां कृष्णं प्रति भक्तिं दृष्ट्वा ब्राह्मणानां मनोदशाया इदं वर्णनम्—

**दृष्ट्वा स्त्रीणां भगवति कृष्णे भक्तिमलौकिकीम्।**
**आत्मानं च तया हीनमनुतप्ता व्यगर्हयन्॥**[4]

---

१. नृत्यन्ती गायती काचित्कूजन्नूपुरमेखला।
पार्श्वस्थाच्युतहस्ताब्जं श्रान्ताऽधात् स्तनयोः शिवम्॥ भागवतपु० १०, ३३, १४

२. विष्णुपु० ५, १३, १६

३. मार्कण्डेयपु० १, २३-२४

४. भागवतपु० १०, २३, २८

अत्र भक्तिरितिपदेन भक्तिस्थायिभावस्य भक्तिरसस्य वा स्वशब्दवाच्यता सम्पाद्यते । भक्तिरितिपदस्य स्थाने प्रीतिरिति पदस्य प्रयोगः शोभनः स्यात् ।

उपरिवर्णिताः पदादिदोषास्त्रिष्वेव पुराणेषु यत्र तत्रोपलभ्यन्ते । यद्येतेषां दोषाणामत्र स्वल्पोऽपि न्यूनीभावोऽभविष्यत्तर्हि काव्यदृष्ट्या पुराणानां महत्त्वं ध्रुवमेवावर्धिष्यत ।

चतुर्थोऽध्यायः

# गुणविवेचनम्

## गुणशब्दस्यार्थः

गुणशब्दस्य व्युत्पत्तिर्गुण् — आमन्त्रण इति धातोर्घञि निष्पद्यते ।[1] मन्त्रणादिभिः पारस्परिकविचारविमर्शैर्वा कस्यचिद्वस्तुनो यो विशेषो धर्मो निश्चीयते स गुणः । वस्तुविशेषस्य यो धर्मः (अन्येभ्यो वस्तुभ्यो विशिष्य) तद्वैशिष्ट्यं व्यनक्ति स एव तस्य (वस्तुनः) गुणः । वामनेनापि विशेष इति शब्दो गुणस्य पर्यायत्वेनाङ्गीकृतः ।[2] अस्य प्रवृत्तिनिमित्त लक्षणं सर्वप्रथमं वामनेन प्रोक्तम् —

**काव्यशोभायाः कर्त्तारो धर्मा गुणाः ।**[3]

शब्दार्थयोर्ये धर्माः काव्यशोभां विदधति ते गुणाः । इमे च गुणा ओजःप्रसादादयोयैर्विना काव्यस्य शोभा न सम्पद्यते ।

## अग्निपुराणवर्तिगुणभागस्य वैशिष्ट्यम्

अग्निपुराणस्य ३४६ तमेऽध्याये गुणानां सविस्तरं वर्णनम् । अस्य भागस्य वैलक्षण्यमधः प्रदर्श्यते —

१. **गुणानां महत्त्वम्** —अस्मिन् पुराणे गुणमहत्त्वं सुविशदमेवं प्रतिपादितम् —

**अलङ्कृतमपि प्रीत्यै न काव्यं निर्गुणं भवेत् ।**
**वपुष्यललिते स्त्रीणां हारो भारायते परम् ॥**[4]

---

१. गुण्यते मन्त्र्यते मन्त्रणादिभिर्निश्चीयते···गुण् आमन्त्रणे घञ् । जयशङ्करजोशिकृतो हलायुधकोशः, पृ० २७६

२. विशेषो गुणात्मा । काव्याल० सू० १, २, ८

३. तत्रैव ३, १, १

४. अग्निपु० ३४६, १

गुणविहीनं हि काव्यं सालङ्कारं सदपि सामाजिकानां चेतसि प्रीतिं नावहति। रूपसम्पद्विहीनायाः स्त्रियाः सौन्दर्यवृद्धिर्हारेण न सम्पाद्यते।

२. **गुणस्य स्वरूपम्** — अग्निपुराणे गुणस्य स्वरूपं भावात्मकं निरूपितम् —

**न च वाच्यं गुणो दोषाभाव एव भविष्यति।**
**गुणाः श्लेषादयो दोषा गूढार्थाद्याः पृथक्कृताः॥**[1]

दोषाभाव एव गुणत्वमिति मतं न समीचीनम्। यतो हि श्लेषादयो गुणा गूढार्थादयश्च दोषाः पृथक्सत्ताकाः। एवमग्निपुराणेन गुणानां स्थितिर्भावात्मिका प्रोक्ता।

गुणेन हि काव्ये सौन्दर्यमाधीयत इति पुराणेऽस्मिन्नेवं प्रतिपादितम् —

**यः काव्ये महतीं छायामनुगृह्णात्यसौ गुणः।**[2]

एवमत्र काव्ये गुणानां रसवदावश्यकी स्थितिर्नाङ्गीकृता ते केवलं काव्यस्योत्कर्षमेव वर्धयन्ति।

३. **गुणानां वर्गीकरणम्** — एतस्मिन् पुराणे गुणानां यद् वर्गीकरणमुपलभ्यते तत् खलु भृशमवधानमर्हति। वामनेन गुणानां शब्दगुणार्थगुणाभिधौ द्वौ भेदावङ्गीकृतौ परमग्निपुराणकारेणोभयगुणसञ्ज्ञस्तृतीयोऽपि भेदो मतः। अपरञ्च तेन परम्परया प्राप्तानां गुणानां दश संख्या न केवलमस्वीकृताऽपित्वेतेषु गुणेषु केषाञ्चिन्नामान्यपि न प्रस्तुतानि क्वचित्तु तानि विपर्यासितानि।

पुराणेऽस्मिन् सर्वे गुणाः पूर्वं सामान्यवैशेषिकभेदयोर्द्विधा विभक्ताः। ये गुणाः सर्वासु रचनासु सामान्येनोपलभ्यन्ते ते सामान्याः।[3] वैशेषिकश्च गुणः कविविशेषमवलम्बते।[4]

अग्निपुराणोक्ताः सामान्यगुणास्त्रिविधाः —

१. शब्दगुणाः २. अर्थगुणाः ३. उभयगुणाश्च।

१. **षडिमे शब्दगुणाः** — १. श्लेषः २. लालित्यम् ३. गाम्भीर्यम्

---

१. अग्निपु० ३४६, २

२. तत्रैव ३४६, ३

३. सर्वसाधारणीभूतः सामान्य इति मन्यते। अग्निपु० ३४६, ४

४. वैशेषिकः परिज्ञेयो यः स्वलक्षणगोचरः। तत्रैव ३४६, २६

४. सुकुमारता ५. औदार्यम् ६. ओजश्च ।[1]

२. षडेतेऽर्थगुणाः — १. माधुर्यम् २. संविधानम् ३. कोमलता ४. उदारता ५. प्रौढिः ६. सामयिकत्वं च ।[2]

३. षडिमे चोभयगुणाः — १. प्रसादः २. सौभाग्यम् ३. यथासंख्यम् ४. प्रशस्यता ५. पाकः ६. रागश्च ।[3]

इमे सर्वे सम्भूयाष्टादशसंख्याका जायन्ते । वैशेषिकगुणस्य नात्रोपभेदा वर्णिताः । यद्यपि वैशेषिकगुणस्य व्यक्तिभेदादनेके भेदाः सम्पद्यन्ते परं समष्टि-रूपेणायमेक एव । एवमत्रैकोनविंशतिर्गुणा विचारपदवीमागताः ।

## अग्न्यादिपुराणेषु गुणानां लक्षणानि प्रयोगाश्च

अग्निपुराणस्य ३४६ तमेऽध्यायेऽष्टादशसामान्यगुणाः सविस्तरं विचारिताः । तत्र वैशेषिकगुणस्य लक्षणमस्पष्टमतएव तद्विषये निश्चप्रचं किमपि वक्तुं न पार्यते । विष्णुमार्कण्डेयभागवतपुराणेष्वनेके गुणा यत्र तत्रोपलभ्यन्ते । अग्निपुराणोक्तानामेतेषामष्टादशगुणानां यानि लक्षणानि तेषां काव्यादर्शसरस्वतीकण्ठाभरणोक्तगुणलक्षणैः सार्धमत्र पूर्वं तुलनात्मकमध्ययनं विहितमनन्तरञ्च कतिपयप्रमुखतमगुणानां निदर्शनानि विष्णुमार्कण्डेयभागवतपुराणेभ्यः उपादाय प्रदर्शितानि ।

### शब्दगुणः

१. श्लेषः — अग्निपुराणोक्तलक्षणम् —

**सुश्लिष्टसन्निवेशत्वं शब्दानां श्लेष उच्यते ।[4]**

शब्दानां सघनगुम्फनमेव श्लेषः । दण्डिना तु यत्रासंयुक्तानामल्पप्राणाक्षराणां च बाहुल्यं न जायते महाप्राणाः संयुक्तवर्णाश्च प्रयुज्यन्ते तत्र श्लेषः ।[5]

---

१. अग्निपु० ३४६, ६-१०

२. तत्रैव ३४६, १२

३. तत्रैव ३४६, १८

४. तत्रैव ३४६, ६

५. श्लिष्टमस्पृष्टशैथिल्यमल्पप्राणाक्षरोत्तरम् । काव्याद० १, ४३

सरस्वतीकण्ठाभरणोक्तश्लेषलक्षणमग्निपुराणोक्तलक्षणेन सह संवदति ।[1]

२. **लालित्यम्** — अग्निपुराणोक्तलक्षणम् —

**गुणादेशादिना पूर्वपदसम्बद्धमक्षरम् ।**
**यत्र सन्धीयते नैव तल्लालित्यमुदाहृतम् ॥**[2]

व्याकरणस्य गुणादेशादिनियमे पूर्वपदस्य वर्णेन सार्धमुत्तरपदस्थवर्णस्य सन्धिर्यत्र नावलोक्यते तत्र लालित्यम् । एवं यत्र सन्धीनामल्पप्रयोगस्तत्रैष गुणः । काव्यादर्शे सरस्वतीकण्ठाभरणे च नास्य गुणस्य कोऽपि निर्देशः ।

३. **गाम्भीर्यम्** — अग्निपुराणोक्तलक्षणम् —

**विशिष्टलक्षणोल्लेखलेख्यमुत्तानशब्दकम् ।**
**गाम्भीर्यं कथयन्त्यार्यास्तदेवान्येषु शब्दताम् ।।**[3]

डा० लाहिरीमतेनाशुद्धोऽयं पाठः । अत्रायं पाठोऽपि सम्भाव्यते—

**विशिष्टलक्षणोल्लेखलेख्यानुत्तानशब्दगम् ।**
**गाम्भीर्यं कथयन्त्यार्यास्तदेवान्ये सुशब्दताम् ।।**[4]

यत्र व्युत्पत्तिमच्छब्दैश्चमत्कारो जन्यते शब्दानां चार्थोऽर्थगाम्भीर्यादापातत एव न प्रतीयते तत्र गाम्भीर्याभिधो गुणः । सरस्वतीकण्ठाभरणस्य सुशब्दताख्यशब्दगुणस्य लक्षणमनेन लक्षणेन सहांशतः संवदति ।[5] अस्यानुत्तानशब्दगमिति पदस्यार्थः सरस्वतीकण्ठाभरणस्य गाम्भीर्यनाम्ना शब्दगुणेन सह सङ्गतिं भजते ।[6] एवमग्निपुराणस्य गाम्भीर्यलक्षणं सरस्वतीकण्ठाभरणोक्तसुशब्दतागाम्भीर्यगुणलक्षणे अप्यन्तर्भावयति ।

४. **सुकुमारता** — अग्निपुराणोक्तलक्षणम् —

**अनिष्ठुराक्षरप्रायशब्दता सुकुमारता ।**[7]

यत्र कोमलवर्णानां बाहुल्यं तत्र सुकुमारता । काव्यादर्शसरस्वतीकण्ठा-

---

१. गुणः सुश्लिष्टपदता श्लेष इत्यभिधीयते । सरस्वतीक० १, ६६

२. अग्निपु० ३४६, ७

३. अग्निपु० ३४६, ८

४. P. C. Lahiri : Concepts of Rīti and Guṇa, p. 189

५. व्युत्पत्तिः सुप्तिङां या तु प्रोच्यते सा सुशब्दता । सरस्वतीक० १, ७२

६. ध्वनिमत्ता तु गाम्भीर्यम्···। तत्रैव १, ७३

७. अग्निपु० ३४६, ९

भरणोक्तलक्षणे सर्वथा समाने ।[1]

**५. औदार्यम् — उत्तानपदतौदार्यं युतं श्लाघ्यैर्विशेषणैः ।**[2]

यत्रापातत एवार्थो ज्ञायते प्रशस्यानि च विशेषणानि प्रयुज्यन्ते तत्रौदार्य-गुणः । काव्यादर्शेनोत्कर्षद्योतको गुण औदार्यत्वेन मतः ।[3] सरस्वतीकण्ठाभरण-स्योदात्तताया लक्षणमप्यस्मिन्नन्तर्भवति ।[4] उत्तानपदतौदार्यमितिभागस्य प्रसादा-ख्यगुणेन सह सादृश्यम् ।[5]

**६. ओजः** — अग्निपुराणोक्तलक्षणम् —

**ओजः समासभूयस्त्वमेतद् गद्यादिजीवितम् ।**[6]

अत्र गुणो समासानां प्राचुर्यम्, अयं च गद्यादिकाव्यस्य जीवनम् । काव्या-दर्शस्य सरस्वतीकण्ठाभरणस्य च लक्षणे लक्षणेनानेन सह सर्वथा संवदतः ।[7]

## अर्थगुणाः

**१. माधुर्यम्** — अग्निपुराणोक्तलक्षणम् —

**क्रोधेर्ष्याकारगाम्भीर्यं माधुर्यं धैर्यगाहिता ।**[8]

यत्र क्रोधेर्ष्यावसरे सत्याकारादौ क्षोभादेरभावाद् गम्भीरभावो धैर्यस्य चास्खलनं दृश्यते तत्र माधुर्यम् । काव्यादर्शस्य माधुर्यलक्षणमेतस्माद् विलक्षणम्, तन्मतेन यत्र सरसत्वं तत्रायं गुणः ।[9] सरस्वतीकण्ठाभरणोक्तलक्षणमप्येता-

---

१. (कः) अनिष्ठुराक्षरप्रायं सुकुमारमिहेष्यते । काव्याद० १, ६९
(खः) अनिष्ठुरप्रायं सुकुमारमिति स्मृतम् ॥ सरस्वतीक० १, ६८

२. अग्निपु० ३४६, ९

३. उत्कर्षवान् गुणः कश्चिद् यस्मिन्नुक्ते प्रतीयते ।
तदुदाराह्वयं तेन सनाथा काव्यपद्धतिः ॥ काव्याद० १, ७६

४. श्लाघ्यैर्विशेषणैर्योगो यस्तु सा स्यादुदात्तता । सरस्वतीक० १, ७०

५. प्रसिद्धार्थपदत्वं यत्स प्रसादो निगद्यते ॥ तत्रैव १, ६६

६. अग्निपु० ३४६, १०

७. (कः) ओजः समासभूयस्त्वमेतद् गद्यस्य जीवितम् ॥ काव्याद० १, ८०
(खः) ओजः समासभूयस्त्वम्··· सरस्वतीक० १, ७१

८. अग्निपु० ३४६, १३

९. मधुरं रसवद्वाचि वस्तुन्यपि रसस्थितिः ।
येन माद्यन्ति धीमन्तो मधुनेव मधुव्रताः ॥ काव्याद० १, ५१

दृगेव ।[1]

२. **संविधानम्** — अग्निपुराणोक्तलक्षणम् —

**संविधानं परिकरः स्यादपेक्षितसिद्धये ।**[2]

अभीप्सितस्य लक्ष्यस्य सिद्धये यत्र प्रयत्नो विधीयते तत्र संविधानम् । सरस्वतीकण्ठाभरणस्यार्थश्लेषस्य लक्षणमनेन लक्षणेन सहांशतः सङ्गच्छते । तत्राप्यभीष्टप्राप्तये सुनियोजितः प्रयत्नः श्लेषः प्रोक्तः ।[3]

३. **कोमलता** — अग्निपुराणोक्तलक्षणम् —

**यत्काठिन्यादिनिर्मुक्तसन्निवेशविशिष्टता ।**
**तिरस्कृत्यैव मृदुता भाति कोमलतेति सा ॥**[4]

क्लिष्टत्वादिदोषनिर्मुक्तायां यस्यां रचनाविशेषायां यदा मृदुतायाः सर्वथाऽभावो नावलोक्यते तदा कोमलता सञ्जायते । वस्तुतोऽस्य गुणस्य यथार्थस्वरूपं न ज्ञायते । मार्दवस्य पारुष्यस्य चात्र गुणे सम्मिश्रणं विलोक्यते । काव्यादर्शसरस्वतीकण्ठाभरणोक्तसुकुमारगुणेन सहास्य गुणस्य साम्यम् ।[5]

४. **उदारता** — अग्निपुराणोक्तलक्षणम् —

**लक्ष्यते स्थूललक्षत्वप्रवृत्तेर्यत्र लक्षणम् ।**
**गुणस्य तदुदारत्वमाशयस्यातिसौष्ठवम् ॥**[6]

यत्र स्थूलदृष्ट्यैवान्तर्निहितो लक्ष्यार्थोऽवगम्यते पुनश्चैष अर्थोऽतिशोभनस्तत्रोदारत्वगुणः । काव्यादर्शस्य सरस्वतीकण्ठाभरणस्य चोदारत्वलक्षणे अनेन लक्षणेन सहांशतः संवदतः ।[7]

---

१. माधुर्यमुक्तमाचार्यैः क्रोधादावप्यतीव्रता । सरस्वतीक० १, ८०

२. अग्निपु० ३४६, १३

३. तेषां श्लेष इति प्रोक्तः संविधाने सुसूत्रता ॥ सरस्वतीक० १, ७८

४. अग्निपु० ३४६, १४

५. (कः) अनिष्ठुराक्षरप्रायं सुकुमारमिहेष्यते । काव्याद० १, ६९
(खः) अनिष्ठुरत्वं यत्प्राहुः सौकुमार्यं तदुच्यते ॥ सरस्वतीक० १, ८०

६. अग्निपु० ३४६, १५

७. (कः) उत्कर्षवान् गुणः कश्चिद् यस्मिन्नुक्ते प्रतीयते ।
तदुदाराह्वयं तेन सनाथा काव्यपद्धतिः ॥ काव्याद० १, ७६
(खः) भूत्युत्कर्ष उदारता ॥ सरस्वतीक० १, ८१

५. **प्रौढिः** — **अभिप्रेतं प्रतिहतं निर्वाहस्योपपादिकाः ।**
**युक्तयो हेतुगर्भिण्यः प्रौढाः प्रौढिरुदाहृता ।।**[१]

अत्राभिप्रेतं प्रतिहतमिति पाठस्य स्थानेऽभिप्रेतं प्रति यत इति पाठो युज्यते ।[२] यत्राभीष्टार्थपुष्टये सोपपत्तिकाः प्रौढा युक्तयः प्रयुज्यन्ते तत्र प्रौढिः । सरस्वतीकण्ठाभरणोक्तलक्षणमनेन संवदति ।[३]

६. **सामयिकता** — अग्निपुराणोक्तलक्षणम् —

**स्वतन्त्रस्यान्यतन्त्रस्य बाह्यान्तः समयोगतः ।**
**तत्र व्युत्पत्तिरर्थस्य या सामयिकतेति सा ।।**[४]

यत्रार्थानां स्वातन्त्र्येण (प्रसङ्गमनपेक्ष्य) पारतन्त्र्येण (प्रसङ्गमपेक्ष्य) वा प्रवृत्तिनिमित्ता व्युत्पत्तिनिमित्ता वा निरुक्तिः प्रदर्श्यते तत्र सामयिकता । सरस्वतीकण्ठाभरणोक्ता सुशब्दताऽनया सङ्गच्छते ।[५]

## उभयगुणाः

१. **प्रसादः** — अग्निपुराणोक्तलक्षणम् —

**सुप्रसिद्धार्थपदता प्रसाद इति गीयते ।**[६]

यत्रातिप्रसिद्धार्थवन्तः शब्दाः प्रयुज्यन्ते तत्र प्रसादः । काव्यादर्शसरस्वतीकण्ठाभरणोक्तलक्षणे अनेन लक्षणेन संवदतः ।[७]

२. **सौभाग्यम्** — अग्निपुराणोक्तलक्षणम् —

**उत्कर्षवान् गुणः कश्चिद् यस्मिन्नुक्ते प्रतीयते ।**
**तत्सौभाग्यमुदारत्वं प्रवदन्ति मनीषिणः ।।**[८]

---

१. अग्निपु० ३४६, १६
२. P. C. Lahiri : Concepts of Rīti and Guṇa, p. 191 fn
३. विवक्षितार्थनिर्वाहः काव्ये प्रौढिरिति स्मृता ।। सरस्वतीक० १, ८८
४. अग्निपु० ३४६, १७
५. व्युत्पत्तिः सुप्तिङां या तु प्रोच्यते सा सुशब्दता ।। सरस्वतीक० १, ७२
६. अग्निपु० ३४६, १९
७. (कः) प्रसादवत्प्रसिद्धार्थम्··· काव्याद० १, ४५
(खः) प्रसिद्धार्थपदत्वं यत्स प्रसादो निगद्यते ।। सरस्वतीक० १, ६६
८. अग्निपु० ३४६, २१

यस्यमुक्तौ कश्चित् सोत्कर्षो गुणः सा सौभाग्यमुदारत्वं वा प्रोच्यते। काव्यादर्शोक्तलक्षणमनेन सह सर्वथा संवदति।[1] सरस्वतीकण्ठाभरणस्योदात्तगुणलक्षणमनेनांशतः सङ्गच्छते।[2]

**३. यथासंख्यम्** — अग्निपुराणोक्तलक्षणम् —

**यथासंख्यमनुद्देशः सामान्यमतिदिश्यते।**[3]

अत्रानुद्देशस्य स्थानेऽनूद्देश इति साधु।[4] पूर्वोक्तवस्तूनां तेनैव प्रथमद्वितीयादिक्रमेणानुकथनं यथासंख्यम्। उत्तरवर्तिनामालङ्कारिकाणां यथासंख्यालङ्कारलक्षणेनैतल्लक्षणं संवदति। सरस्वतीकण्ठाभरणस्य रीत्याख्यशब्दगुणोऽनेन सदृशः।[5]

**२. प्राशस्त्यम्** — अग्निपुराणोक्तलक्षणम् —

**समये वर्णनीयस्य दारुणस्यापि वस्तुनः।**
**अदारुणेन शब्देन प्राशस्त्यमुपवर्णनम्॥**[6]

अवसरानुकूलस्य वर्णनीयस्य भयावहस्यामङ्गलसूचकस्य वा वस्तुनः शुभवचनैर्वर्णनं यत्र विधीयते तत्र प्राशस्त्यम्। सरस्वतीकण्ठाभरणस्य सुशब्दताख्यार्थगुणलक्षणमनेन लक्षणेन संवदति।[7]

**५. पाकः** — अग्निपुराणोक्तलक्षणम्—

**उच्चैः परिणतिः काऽपि पाक इत्यभिधीयते।**[8]

यत्र कस्याञ्चिद्रचनायां भाषादेः सौष्ठवं चरमां काष्ठां याति तत्र पाकः। सरस्वतीकण्ठाभरणस्य प्रौढिशब्दगुणोऽनेन सङ्गच्छते।[9]

---

१. उत्कर्षवान् गुणः कश्चिद् यस्मिन्नुक्ते प्रतीयते।
तदुदाराह्वयं तेन सनाथा काव्यपद्धतिः॥ काव्याद० १, ७६

२. आशयस्य य उत्कर्षस्तदुदत्तात्वमिष्यते। सरस्वतीक० १, ८२

३. अग्निपु० ३४६, २१

४. P. C. Lahiri : Concepts of Riti and Guṇa, p. 192 fn.

५. उपक्रमस्य निर्वाहो रीतिरित्यभिधीयते। सरस्वतीक० १, ७६

६. अग्निपु० ३४६, २१-२२

७. अदारुणार्थपर्यायो दारुणेषु सुशब्दता। सरस्वतीक० १, ८३

८. अग्निपु० ३४६, २२

९. उक्तेः प्रौढः परीपाकः प्रोच्यते प्रौढिसञ्ज्ञया॥ सरस्वतीक० १, ७७

६. रागः — अग्निपुराणोक्तलक्षणम्—

**काव्येच्छया विशेषो यः स राग इति गीयते ।**
**अभ्यासोपहितः कान्तिं सहजामपि वर्तते ॥**[1]

यदा केनचित्कविनोत्तमकाव्यविरचनाभीप्सया सतताभ्यासानन्तरं स्वीयकाव्ये सौन्दर्याधायकः कश्चिद्विशिष्टोऽद्भुतो वा गुणः समाविश्यते गुणश्चायं भाषादौ वर्तमानं कान्तिमप्यतिशेते तदा तत्काव्यं रागगुणान्वितं जायते। वस्तुतोऽग्निपुराणकारेण गुणोऽयं न सम्यग् व्याख्यातः वैशेषिकगुणस्य स्वरूपं पुराणकारेण स्फुटं न विवेचितम्।

अग्निपुराणस्याष्टादशगुणा उपरि वर्णिताः। इदानीमेषु प्रमुखतमानामसन्दिग्धस्वरूपाणां चाष्टगुणानां लक्षणानि प्रदर्श्य तेषामुदाहरणानि विष्णुमार्कण्डेयभागवतपुराणेभ्य उद्ध्रियन्ते। एषां गुणानां लक्षणान्युदाहरणानि च काव्यादर्शे सरस्वतीकण्ठाभरणे वाऽप्युपलभ्यन्ते।

## १. श्लेषः

**सुश्लिष्टसन्निवेशत्वं शब्दानां श्लेष उच्यते ।**[2]

विष्णुपुराणे प्रह्लादो दैत्यबालान् भगवद्भक्त्यै प्रेरयति—

**तस्मिन् प्रसन्ने किमिहास्त्यलभ्यं**
**धर्मार्थकामैरलमल्पकास्ते ।**
**समाश्रिताद् ब्रह्मतरोरनन्ता-**
**न्निःसंशयं प्राप्स्यथ वै महत्फलम् ॥**[3]

अत्र किमिहास्त्यलभ्यमिति धर्मार्थकामैरलमल्पकास्त इति च भिन्नानामपि पदानामेकपदताप्रतीतेः सन्दर्भे सुश्लिष्टत्वमतएवात्र श्लेषो गुणः।

मार्कण्डेयपुराणे सृष्टिवर्णनम्—

**एकविंशमथर्वाणमाप्तोर्यामाणमेव च ।**
**आनुष्टुभं स वैराजमुत्तरादसृजन्मुखात् ॥**[4]

---

१. अग्निपु० ३४६, २४

२. अग्निपु० ३४६, ६

३. विष्णुपु० १, १७, ९१

४. मार्कण्डेयपु० ४५, ३४

अत्राप्येकविंशमित्यादौ वैराजमित्यादौ च पदानां सुश्लिष्टत्वाच्छ्लेषो गुणः।

भागवतपुराणे गोवर्धनधारणानन्तरं विदितकृष्णप्रभाव इन्द्रः कृष्णमेवं स्तौति—

तवावतारोऽयमधोक्षजेह
स्वयम्भराणामुरुभारजन्मनाम्।
चमूपतीनामभवाय देव
भवाय युष्मच्चरणानुवर्तिनाम्॥[1]

अत्रादिमेषु त्रिषु चरणेषु भिन्नानामपि पदानामेकपदताप्रतीतिहेतुना सन्दर्भस्य सुश्लिष्टत्वाच्छ्लेषो गुणः।

## २. लालित्यम्

गुणादेशादिना पूर्वपदसम्बद्धमक्षरम्।
यत्र सन्धीयते नैव तल्लालित्यमुदाहृतम्॥[2]

विष्णुपुराणे प्रह्लादो हिरण्यकशिपुं कथयति—

सर्वभूतात्मके तात जगन्नाथे जगन्मये।
परमात्मनि गोविन्दे मित्रामित्रकथा कुतः॥[3]

अत्र पूर्वपदसम्बद्धाक्षरैः सह सन्धीनामभावाल्लालित्यम्।

भागवतपुराणे सुरभिः कृष्णं स्तौति—

कृष्ण कृष्ण महायोगिन् विश्वात्मन् विश्वसम्भव।
भवता लोकनाथेन सनाथा वयमच्युत॥[4]

अत्रापि पूर्वपदसम्बद्धाक्षरैः सह सन्धीनामभावाल्लालित्याभिधो गुणः।

## ३. सुकुमारता

अनिष्ठुराक्षरप्राया शब्दता सुकुमारता॥[5]

---

१. भागवतपु० १०, २७, ६
२. अग्निपु० ३४६, ७
३. विष्णुपु० १, १६, ३७
४. भागवतपु० १०, २७, १६
५. अग्निपु० ३४६, ६

विष्णुपुराणे प्रह्लादकृतो विष्णुस्तवः —

**नमो ब्रह्मण्यदेवाय गोब्राह्मणहिताय च ।**
**जगद्धिताय कृष्णाय गोविन्दाय नमो नमः ॥**[1]

अत्रानिष्ठुराक्षरबाहुल्यात्सुकुमारतागुणः ।

भागवतपुराणस्य रासलीलाप्रसङ्गे गोपीदशावर्णनम्—

**ता वार्यमाणाः पतिभिः पितृभिर्भ्रातृबन्धुभिः ।**
**गोविन्दापहृतात्मानो न न्यवर्तन्त मोहिताः ॥**[2]

अत्रापि कोमलवर्णबाहुल्यात्सुकुमारता ।

## ४. ओजः

**ओजः समासभूयस्त्वमेतद् गद्यादि-जीवितम् ।**[3]

विष्णुपुराणे पूर्वजन्मावसरे शिशुपालस्य भगवच्चिन्तनवर्णनम्—

तच्च रूपमुत्फुल्लपद्मदलामलाक्षमत्युज्ज्वलपीतवस्त्रधार्यमलकिरीटकेयूरहारकटकादिशोभितमुदारचतुर्बाहुशङ्खचक्रगदाधरमतिप्ररूढवैरानुभावादटनभोजनस्नानासनशयनादिष्वशेषावस्थान्तरेषु नान्यत्रोपययावस्य चेतसः ।[4]

अस्मिन्नेव पुराणे भगवतः पारमार्थिकस्वरूपवर्णनम्—

**समस्तकल्याणगुणात्मकोऽसौ**
**स्वशक्तिलेशावृतभूतवर्गः ।**
**इच्छागृहीताभिमतोरुदेह-**
**स्संसाधिताशेषजगद्धितो यः ॥**[5]

उभयत्र समासानां प्रयोगबाहुल्यादोजोगुणः ।

मार्कण्डेयपुराणे देवीपराक्रमवर्णनम्—

**दृष्ट्वा तु देवि कुपितभृकुटीकराल-**
**मुद्यच्छशाङ्कसदृशच्छवि यन्न सद्यः**

---

१. विष्णुपु० १, १९, ६५
२. भागवतपु० १०, २९, ८
३. अग्निपु० ३४६, १०
४. विष्णुपु० ४, १५, १३
५. तत्रैव ६, ५, ८४

**प्राणान्मुमोच महिषस्तदतीव चित्रं**
**कैर्जीव्यते हि कुपितान्तकदर्शनेन ॥**[1]

अत्र समासबाहुल्यादोजः ।

भागवतपुराणे भगवतः सङ्कर्षणस्य (शेषस्य) वर्णनम्—

यस्यैव हि नागराजकुमार्य आशिष आशासानाश्चार्वङ्गवलयविलसितविशदविपुलधवलसुभगरुचिरभुजरजतस्तम्भेष्वगुरुचन्दनकुङ्कुमपङ्कानुलेपेनावलिम्पमानास्तदभिमर्शनोन्मथितहृदयमकरध्वजावेशरुचिरललितस्मितास्तदनुरागमद-मुदितमदविघूर्णितारुणकरुणावलोकनयनवदनारविन्दं सव्रीडं किल विलोकयन्ति ।[2]

अस्मिन्नेव पुराणे परत्र वानरसेनावृताया लङ्काया वर्णनम्—

**सा वानरेन्द्रबलरुद्धविहारकोष्ठ-**
**श्रीद्वारगोपुरसदोवलभीविटङ्का ।**
**निर्भज्यमानधिषणध्वजहेमकुम्भ-**
**शृङ्गाटका गजकुलैर्ह्रदिनीव घूर्णा ॥**[3]

उभयत्र पदेषु समासभूयस्त्वादोजः ।

## ५. माधुर्यम्

**क्रोधेर्ष्याकारगाम्भीर्यं माधुर्यं धैर्यगाहिता ।**[4]

मार्कण्डेयपुराणस्य हरिश्चन्द्रोपाख्याने विश्वामित्रे कुपिते सति तं प्रति हरिश्चन्द्रस्यैवंविधमाचरणम्—

**स दुरात्मन्निति यदा मुनिस्तिष्ठेति चाब्रवीत् ।**
**ततः स राजा विनयात्प्रणिपत्याभ्यभाषत ॥**[5]

अत्र हरिश्चन्द्रे क्षमातिशयविलोकनान्माधुर्याख्योऽर्थगुणः ।

भागवतपुराणे सुरुच्याऽवमानितं स्वपुत्रं ध्रुवं प्रति भाषमाणायाः सुनीते

---

१. मार्कण्डेयपु० ८१, १३

२. भागवतपु० ५, २५, ५

३. तत्रैव ६, १०,१७

४. अग्निपु० ३४६, १३

५. मार्कण्डेयपु० ७, १६

वर्णनम्—

**दीर्घं श्वसन्ती वृजिनस्य पार-**
**मपश्यती बालकमाह बाला ।**
**माऽमङ्गलं तात परेषु मंस्था**
**भुङ्क्ते जनो यत्परदुःखदस्तत् ॥**[1]

अत्रापि सुनीत्याः क्षमाप्रवृत्तिदर्शनान्माधुर्यगुणः ।

## ६. प्रसादः

**सुप्रसिद्धार्थपदता प्रसाद इति गीयते ॥**[2]

विष्णुपुराणे शरद्वर्णनम्—

**मयूरा मौनमातस्थुः परित्यक्तमदा वने ।**
**असारतां परिज्ञाय संसारस्येव योगिनः ॥**[3]

अत्र प्रसिद्धार्थपदप्रयुक्तत्वात्प्रसादो गुणः ।

मार्कण्डेयपुराणे पुरुषकारस्य महिमानमुपदिशन् पिता पुत्रं कथयति—

**योजनानां सहस्राणि याति गच्छन् पिपीलिकः ॥**
**अगच्छन् वैनतेयोऽपि पदमेकं न गच्छति ।**[4]

अत्र सुप्रसिद्धार्थशब्दानां प्रयोगात्प्रसादाख्यो गुणः ।

भागवतपुराणे चाणूरमुष्टिकादिभिर्मल्लैः सार्धं योद्धुमानीतौ कृष्णबलरामौ दृष्ट्वा पुरयोषितो मिथो वदन्ति—

**क्व वज्रसारसर्वाङ्गौ मल्लौ शैलेन्द्रसन्निभौ ।**
**क्व चातिसुकुमाराङ्गौ किशोरौ नाप्तयौवनौ ॥**[5]

अत्रापि प्रसिद्धार्थपदानां प्रयुक्तत्वात् प्रसादो गुणः ।

---

१. भागवतपु० ४, ८, १७
२. अग्निपु० ३४६, १६
३. विष्णुपु० ५, १०, ३
४. मार्कण्डेयपु० १८, ३८-३६
५. भागवतपु० १०, ४४, ८

## ७. सौभाग्यम्

**उत्कर्षवान् गुणः कश्चिद् यस्मिन्नुक्ते प्रतीयते ।**
**तत्सौभाग्यमुदारत्वं प्रवदन्ति मनीषिणः ॥**[1]

भागवतपुराणे कृष्णः स्वपरिजनमुपदिशति—

**दुर्जरं बत ब्रह्मस्वं भुक्तमग्नेर्मनागपि ।**
**तेजीयसोऽपि किमुत राज्ञामीश्वरमानिनाम् ॥**[2]

अत्र ब्राह्मणानामेतादृशी शक्तिर्यत् तेषां धनं न कोऽपि हर्तुं प्रभवतीत्यर्थो द्योतते। एवमत्र प्रकारान्तरेण ब्राह्मणानां शक्त्यतिशयरूपोत्कर्षस्य द्योतनात् सौभाग्याख्यो गुणः।

## ८. प्राशस्त्यम्

**समये वर्णनीयस्य दारुणस्यापि वस्तुनः ॥**
**अदारुणेन शब्देन प्राशस्त्यमुपवर्णनम् ।**[3]

विष्णुपुराणे प्रह्लादस्य देहत्यागवर्णनम्—

**क्षीणाधिकारः स यदा पुण्यपापविवर्जितः ।**
**तदा स भगवद्ध्यानात्परं निर्वाणमाप्तवान् ॥**[4]

अत्र दारुणार्थबोधकं मृत्युशब्दमनाख्याय निर्वाणशब्देन तन्निर्देशात् प्राशस्त्यम्।

भागवतपुराणे नृपतेः सगरस्य मृत्योर्वर्णना—

**राज्यमंशुमति न्यस्य निःस्पृहो मुक्तबन्धनः ।**
**और्वोपदिष्टमार्गेण लेभे गतिमनुत्तमाम् ॥**[5]

यत्रापि दारुणार्थद्योतको मृत्युशब्दो न प्रयुक्तः। गतिमनुत्तमामिति-कथनेन तन्निर्देशादत्र प्राशस्त्यम्।

---

१. अग्निपु० ३४६, २०

२. भागवतपु० १०, ६४, ३२

३. अग्निपु० ३४६, २१-२२

४. विष्णुपु० १, २०, ३४

५. भागवतपु० ९, ८, ३१

# समीक्षणम्

उपरिवर्णितानामग्निपुराणस्थगुणानां यथार्थस्वरूपमवगन्तुं दुष्करम् । यद्यप्यत्र नवदशगुणानां सलक्षणं वर्णनं तथापि सर्वेषां गुणानां स्वरूपाणि विशदीकर्त्तुमुपयुक्तान्युदाहरणानि न प्रदर्शितानि । अस्मादेतत्पुराणोक्तेषु सर्वेषु गुणेषु कतिपयानां तेषामेव श्लेषादिगुणानां स्वरूपं ज्ञातुं शक्यते येषां लक्षणानि काव्यादर्शसरस्वतीकण्ठाभरणोक्तलक्षणैः सह सर्वथांशतो वा संवदन्ति । अनयो ग्रन्थयोरेते गुणाः सलक्षणं सोदाहरणञ्च व्याख्याताः । तेषां स्वरूपाणि दृष्ट्वाऽग्निपुराणोक्तानां तत्सन्निभगुणानां स्वरूपमपि ज्ञातुं पार्यते ।

अलङ्कृतमपि प्रीत्यै न काव्यं निर्गुणं भवेदिति[1] प्रोच्याग्निपुराणकारेणालङ्काराद् गुणस्य भूयो महत्त्वं निगदितम् । रीतिरात्मा काव्यस्येति[2] ब्रुवताऽग्निपुराणकारात्पूर्ववर्तिना वामनेनाप्यलङ्काराद् रीतेः स्थितिः प्रकृष्टतरा प्रोक्ता । गुणरीत्योश्च तन्मतेन तादात्म्यसम्बन्धः । अस्माद् वामनमतेनापि गुणस्य महिमाऽलङ्काराद् भूयानिति वक्तुं शक्यते । अग्निपुराणस्य काव्यप्रसङ्गेऽलङ्कारस्येदं लक्षणम्—काव्यशोभाकरान् धर्मानलङ्कारान् प्रचक्षते,[3] गुणश्च तेनैवं लक्षितः—यः काव्ये महतीं छायामनुगृह्णात्यसौ गुणः ।[4] गुणालङ्कारयोरेते लक्षणे परस्परं संवदतः । एतयोः कोऽपि मूलभूतो भेदो नोपलभ्यते । अत्र गुणस्य यल्लक्षणं तदेवालङ्कारस्यापि सम्भवति यच्चालङ्कारस्य तदेव गुणस्यापि । एवमग्निपुराणस्यैकस्मिन् स्थले तु गुणस्यालङ्कारादधिकतरं महत्त्वं निर्दिष्टं परमन्यत्र तयोः स्थितिः तुल्यत्वेन प्रदर्शिता ।[5] एतत्सर्वमग्निपुराणकारस्यानालोचनात्मिकां सङ्कलनप्रवृत्तिमेवाभिसूचयति ।

एवं गुणालङ्कारयोः कतमो वरीयानिति विषये स्वमतं विशदीकर्त्तुमग्निपुराणकारः साफल्यं न भजते । परं तेन गुणदोषलक्षणविषये यत्किमपि लिखितं तन्नितरां स्फुटम् । दण्डिनो मतेन दोषाः काव्यस्य विपत्तिहेतवो गुणाश्च सम्पत्तिहेतवः ।[6] एवं तेन काव्यसौन्दर्यविघातकत्वं दोषः काव्यसौन्दर्याधायकत्वं

---

१. अग्निपु० ३४६, १

२. काव्याल० सू० १, २

३. अग्निपु० ३४२, १७

४. तत्रैव ३४६, ३

५. विलोक्यतु P. C. Lahiri : Concepts of Rīti and Guṇa, p. 185

६. दोषा विपत्तये तत्र गुणाः सम्पत्तये तथा ॥ काव्याद० ३,१२५

च गुण इति स्वीकृतम् । अग्निपुराणकारेणापि गुणदोषयोः परस्परमेतादृश एव सम्बन्धो मतः । तेनापि काव्ये महत्याः शोभाया आधायको धर्मो गुणस्तत्र च रसविघातकत्वरूपोद्वेगस्य जनयिता दोषो मतः । अग्निपुराणसम्मतस्यास्य गुणस्य लक्षणे दोषाभावसंसूचकोऽप्यर्थ आसज्यते यतो ह्यत्र वर्णितयोर्गुणदोषयो धर्मा विपर्ययात्मानः । परमग्निपुराणकारो गुणदोषयोः स्वतन्त्रौ वर्गाविति स्वीकरोति । गुणानां दोषाभावात्मकं स्वरूपं प्रत्याख्यायता तेनोक्तम्—न च वाच्यं गुणो दोषाभाव एव भविष्यति । गुणाः श्लेषादयो दोषा गूढार्थाद्याः पृथक् कृताः ।[1] एवं तेन श्लेषादयो गुणा गूढार्थादयश्च दोषाः पृथक् पृथक् स्वीकृताः ।

अस्मिन् पुराणे वैशेषिकगुणस्य स्वरूपं सम्यङ् न विशदीकृतम् । वैशेषिकगुणस्यैवं लक्षणम्—वैशेषिकः परिज्ञेयो यः स्वलक्षणगोचरः ।[2] यो गुणः कस्यचित्कविविशेषस्य कृतौ लक्ष्यते पुनश्च स नान्येषां कवीनां कृतिषु दृश्यते तस्य तदीयं रूपमेव स्वलक्षणं जायते । अस्य लक्षणस्येमौ द्वावर्थौ प्रतीयेते—(१) यः कोऽपि सुकविर्यत्किमपि काव्यं निबध्नाति तस्य तत्काव्ये कञ्चिद्गुणविशेषं प्रति गाढानुरागो दृश्यते । यदि स श्लेषप्रियस्तर्हि तस्य रचनायां समासादीनां प्राचुर्येण प्रयोगः परं यद्यसौ प्रसादानुरागी तदा तस्य रचनायां श्लेषाणामभावः कोमलपदानां च प्राचुर्यमुपलभ्यते । एवं यस्मै कवये यो गुणो रोचते स एव तस्य विशेषो वैशेषिको वा गुणः । (२) अन्यैः कविभिरिव श्लेषादीन् गुणान् प्रयुञ्जताऽपि केनचित् कविना या कृतिर्निर्मीयते सा ध्रुवमेवेतरेभ्यः किञ्चिद् भिन्ना जायते । तस्यां कृतौ कश्चित्प्रकारविशेषः स्वत एव प्रादुर्भवति यः खलु तामितराभ्यो रचनाभ्यो विशिनष्टि । कदाचित्तस्य कवेः स विशेषो गुण एवात्र वैशेषिकगुणत्वेन व्यपदिष्टः । तथाप्यस्य वैशेषिकगुणविषये निश्चप्रचं किमपि वक्तुं न पार्यते ।

अग्निपुराणस्य गुणानां विषये डा० पी० सी० लाहिरीमहोदयेन सविशेषं विचारितम् ।[3] तन्मतं संक्षेपतोऽत्र प्रस्तूयते—अग्निपुराणकारेण ये गुणाः प्रोक्तास्तेषु केचन दण्डिना भोजराजेन च वर्णितैर्गुणैः सार्धं सर्वथा संवदन्ति । इमे गुणास्तेन तदीयरचनाभ्यां गृहीता इति प्रतीयते । अवशिष्टाश्च गुणा

---

१. अग्निपु० ३४६, २
२. तत्रैव ३४६, २६
३. P. C. Lahiri : Concepts of Rīti and Guṇa, pp. 187-196

अविदितस्रोतोभ्यः सङ्गृहीता उत वा पुराणकारेण स्वयमेव विनिर्मिताः। यद्येष भागस्तस्य मौलिकोपदात्वेन स्वीक्रियेत तर्हि लक्षणानामस्पष्टत्वाद् ग्रन्थकारस्यावैदग्ध्यं सूच्यते। यद्यसावेनमितरेभ्यो ग्रन्थेभ्योऽगृहीदिति मन्येत तर्ह्येषां गुणानां स्वरूपस्यानालोचनात्मकत्वात्सङ्ग्रहीतुरपाण्डित्यमाभासते। इमानि खलु गुणलक्षणान्यस्पष्टान्यस्मात्पाठकस्तेषामसन्दिग्धं ज्ञानमवाप्तुमक्षमः। लक्षणानामुदाहरणाभावादपि तेषां वैशिष्ट्यस्य सूक्ष्मज्ञानं न जायते। शब्दार्थोभयगुणानां पारस्परिकभेदसंसूचकः कश्चिद् भेदोऽपि नात्र प्रदर्शितः। अपरञ्च केषाञ्चिच्छब्दगुणानां वर्णनमर्थगुणमध्येऽन्येषां चापि केषाञ्चिदर्थगुणानामन्येषु केषुचिच्छब्दगुणेषु विहितम्। सतीयौगिकीनामानौ द्वौ शब्दगुणौ नाम्नैवाख्यातौ न तयोर्लक्षणे विहिते। शब्दगुणानां लक्षणावसरे सहसैवौजोगुण आविर्भवति यद्यपि स पूर्वं शब्दगुणानां मध्ये न संख्यातः। अस्मिन् पुराणे गुणवर्णनस्यैतादृशीमव्यवस्थामवलोक्य डा० लाहिरीमहोदयोऽस्यालङ्कारभागविषये स्वमतमुपसंहरन्निदमभिव्यनक्ति—

"The Alaṁkāra-section in the Agnipurāṇa is chiefly a compilation by a writer who was himself no theorist but who ... wanted to collect together and present a workable epitome ... conforming in essentials to the teaching of no particular orthodox school."[1]

एवं डा० लाहिरीमहोदयानुसारेणाग्निपुराणस्यालङ्कारभागः केनचिच्छास्त्रीयसिद्धान्तप्रवर्त्तकेनाचार्येण न विरचितः। एषा रचना प्राधान्येन सङ्कलनात्मिका। अस्य रचयिता विविधान् विषयानेकत्र निधाय विश्वकोशरूपात्मकं कमपि ग्रन्थं रचयितुमैच्छत्। अस्मादत्र तेन कस्यापि सम्प्रदायविशेषस्य विचारा न प्रतिपादिता न चालोचिताः। केवलं तदानींतनोपलब्धविविधसम्प्रदायानां सिद्धान्तानेवासावग्रहीत्।

वस्तुतोऽग्निपुराणस्य व्याकरणालङ्काररसादीनां तत्तत्प्रकरणेषु नियमानां लक्षणानां चोदाहरणाभावो दृश्यते। नियमलक्षणानुकूलोदाहरणानामभावात्तत्तत्प्रकरणानां विषयाः स्फुटं न ज्ञायन्ते। यद्येतेषां व्याकरणादीनां नियमैर्लक्षणैश्च सार्धं तेषामुदाहरणान्यप्यत्राभविष्यन् तर्ह्यग्निपुराणस्य महत्त्वं द्वित्रगुणमवर्धिष्यत।

काव्यशास्त्रविद्भिराचार्यैर्माधुर्यौजःप्रसादाख्यास्त्रयः प्रधानतमा गुणा

---

1. P. C. Lahiri : Concepts of Rīti and Guṇa, p. 196

मताः ।[1] तैरन्ये गुणा एतेष्वेवान्तर्भाविताः । अपरञ्च तेषामाचार्याणां मतेन सर्वेषु रसेष्विमे गुणा मात्राभेदेनावतिष्ठन्ते । यद्यपि नैतेषु गुणानामावश्यकी स्थितिस्तथापि गुणै रसानामुत्कर्षो वर्धते । अनेनोत्कर्षहेतुनैव तेषां गुणेषु स्वल्पोऽनल्पो वा समावेशो जायते । माधुर्यगुणः सम्भोगविप्रलम्भश्रृङ्गारयोः करुणशान्तयोश्च प्रयुज्यते। ओजोगुणो वीरबीभत्सरौद्रेषु प्रसादश्च सर्वेषु रसेषु दृश्यते ।[2] रसैरिव रीतिभिः सार्धमपि गुणानां सम्बन्ध इत्यपि तैरङ्गीकृतम् । वैदर्भीगौडीयापाञ्चाल्याख्यप्रमुखतमरीतीनां लक्षणेष्वेतेषां त्रयाणां कोमलादिवर्णात्मनां गुणानां प्रमुखतमं स्थानम् ।[3] एवं कतिपयानेवाचार्यान् विहाय सर्वैराचार्यैर्गुणानां रीतिभिः सार्धं तादात्म्यसम्बन्धो रसैश्च सार्धमुत्कर्षाधायकहेतुत्वं स्वीकृतम् । संस्कृतवाङ्मयस्य कालिदासभट्टनारायणादिभिः कविभिरपि स्वीयरचनानामधिकांशस्थलेषु रसानुकूलगुणरीतयः प्रयुक्ताः । अभिज्ञानशाकुन्तले महाकविः कालिदासः श्रृङ्गाररसनिरूपणाय माधुर्यप्रसादगुणौ वैदर्भी पाञ्चाल्यौ च रीती प्रयुङ्क्ते—

**अनाघ्रातं पुष्पं किसलयमलूनं कररुहै**
**रनाविद्धं रत्नं मधु नवमनास्वादितरसम् ।**
**अखण्डं पुण्यानां फलमिव च तद्रूपमनघं**
**न जाने भोक्तारं कमिह समुपस्थास्यति विधिः ॥**[4]

एवमेव वीरं रसं निरूपयितुं भट्टनारायणेनौजोगुणो गौडीया च रीतिराश्रिता—

**चञ्चद्भुजभ्रमितचण्डगदाभिघात-**
**सञ्चूर्णितोरुयुगलस्य सुयोधनस्य ।**
**स्त्यानावनद्धघनशोणितशोणपाणि-**
**रुत्तंसयिष्यति कचांस्तव देवि भीमः ॥**[5]

---

१. विलोकयतु : साहित्यद० ८, १
२. तत्रैव ८, २; ७-८
३. (कः) माधुर्यव्यञ्जकैर्वर्णै रचना ललितात्मिका ॥
अवृत्तिरल्पवृत्तिर्वा वैदर्भी रीतिरिष्यते ।
(खः) ओजः प्रकाशकैर्वर्णैर्बन्ध आडम्बरः पुनः ॥
समासबहुला गौडी···
(गः) ···वर्णैः शेषैः पुनर्द्वयोः ।
समस्तपञ्चषपदो बन्धः पाञ्चालिका मता ॥ साहित्यद० ९, २-४
४. अभिज्ञानशाकुन्तलम् २, ११
५. वेणीसंहारम् १, २१

परमग्निपुराणकारेण गुणानां रीतिभिः सार्धं न कोऽपि सम्बन्धो मत इति पूर्वं प्रदर्शितम् । तत्र हि रीतीनां वर्गीकरणं प्राधान्येन रसानलङ्कारांश्चाश्रित्य विहितम् । एतदर्थं गुणानामाधारो नापेक्षितः । रसप्रसङ्गेषु गुणानां गुणप्रकरणे च रसानां न कोऽपि निर्देशो दृश्यते । एवं रीतिभिरिव रसैरपि सार्धमनेन पुराणेन गुणानां प्रत्यक्षसम्बन्धो नोक्तः ।

विष्णुमार्कण्डेयभागवतपुराणकारा अपि रसै रीतिभिश्च समं गुणानां यः सहजसम्बन्धस्तं प्रत्युपेक्षावृत्तिमगृह्णान्नित्येतेषां पुराणानां सूक्ष्माध्ययनेन प्रतीयते । शृङ्गारकरुणशान्तभक्तिरसानां च वर्णनावसरेषु तदनुकूलाः कोमलवर्णा वर्गाणां पञ्चमाक्षरैः संयुक्ताश्च वर्णा असमासा स्वल्पसमासा वा पदरचना अधिकांशस्थलेषु न प्रयुक्ताः । एतादृशेषु केषुचित्स्थलेषु दीर्घसमासानां कठोरवर्णानां च बाहुल्यं दृश्यते । वीरबीभत्सरौद्ररसप्रसङ्गेष्वपि कान्तपदावल्यः स्वल्पसमासाश्चाप्युपलभ्यन्ते । दिङ्मात्रमत्रोदाह्रियते—

भागवतपुराणस्याग्नीध्रचरिते शृङ्गाररसप्रतिकूलगुणरीतिमती पदरचना—

सा च तदाश्रमोपवनमतिरमणीयं विविधनिबिडविटपिविटपनिकरसंश्लिष्टपुरटलतारूढस्थलविहङ्गममिथुनैः प्रोच्यमानश्रुतिभिः प्रतिबोध्यमानसलिलकुक्कुटकारण्डवकलहंसादिभिर्विचित्रमुपकूजितामलजलाशयकमलाकरमुपबभ्राम ।[1]

एतादृशी रचना शृङ्गाररसप्रतिकूला । यद्यप्यत्रौजोगुणः परमत्रानेन गुणेनास्यामुत्कर्षो नाधीयते ।

विष्णुपुराणे कंसवधप्रसङ्गः —

**मृतस्य केशेषु तदा गृहीत्वा मधुसूदनः ।**
**चकर्ष देहं कंसस्य रङ्गमध्ये महाबलः ॥**
**गौरवेणातिमहता परिखा तेन कृष्यता ।**
**कृता कंसस्य देहेन वेगेनेव महाम्भसः ॥**
**कंसे गृहीते कृष्णेन तद्भ्राताऽभ्यागतो रुषा ।**
**सुमाली बलभद्रेण लीलयैव निपातितः ॥**[2]

अत्र वीररौद्ररसप्रतिकूलौ माधुर्यप्रसादगुणौ प्रयुक्तौ । एतादृशाय प्रसङ्गायौजसः यप्रोगः शोभनः ।

---

१. भागवतपु० ५, २, ४

२. विष्णुपु० ५, २०, ८८-९०

मार्कण्डेयपुराणे मङ्गलाचरणम्—

**पायात् स वः सकलकल्मषभेददक्षः**
**क्षारोदकुक्षिफणिभोगनिविष्टमूर्त्तिः ।**
**श्वासावधूतसलिलोत्कणिकाकरालः**
**सिन्धुः प्रनृत्यमिव यस्य करोति सङ्गात् ।।**[1]

अत्र भक्तिरसप्रतिकूलौजोगुणः। शृङ्गार इव भक्तिरसेऽपि प्रसादमाधुर्ये उत्कर्षमावहतः।

उपरिवर्णितेषु त्रिषु स्थलेष्वोजःप्रभृतयो गुणास्तु विद्यन्ते परं ते स्वसम्बद्धे रसे नोत्कर्षमादधति। रसस्योत्कर्षाधायकत्वमेव गुणत्वमिति पूर्वं प्रतिपादितम्। वस्तुतो रसोपकारित्वमेव गुणानां प्रयोजनम्। यदीमे काव्यस्थितं रसं नोपकुर्वन्ति तर्हि तेषां तत्रावस्थानमपार्थमिव सञ्जायते। यद्यप्यस्थाने संयोजिता अलङ्कारा इवेमे गुणा अपि स्वल्पामनल्पां वा शोभामावहन्त्येव परं यद्येते स्थाने प्रयुज्यन्ते तर्हि ध्रुवमेव काव्ये महती शोभा सम्पद्यते। विष्णुमार्कण्डेयभागवतपुराणेषु यत्र तत्रोपलभ्यमाना गुणाः स्वकीयं सौन्दर्यं तु प्रकटयन्त्येव परं न ते प्रायशो रसानुपकुर्वन्ति। तत्तत्स्थानविशेषेषु विद्यमानै रसैः सार्धं न तेषां प्रत्यक्षसम्बन्धो यतो हि तत्र रसविशेषानुकूला गुणा न प्रयुक्ताः। अतस्तत्रैतेषां गुणानां न तावदुपयोगित्व यावत् खलु कालिदासादीनां रचनासु विद्यमानानां रसानुकूलगुणानाम्। एतेषां कवीनां रचनासु प्रायो रसरीतिगुणानां मध्ये परस्परमानुकूल्यमुपलभ्यते। यद्येतेषु पुराणेषु रसानुकूला गुणाः समस्थास्यन् तर्हि रसगुणमध्ये मणिकाञ्चनसंयोगोऽभविष्यत्।

यद्यपि विष्णुमार्कण्डेयभागवतपुराणेषूपरिवर्णितानष्टगुणानतिरिच्यान्येऽपि गुणा विलोक्यन्ते परमत्राष्टावेव विचारिताः। हेतवस्तु पूर्वं प्रदर्शिताः। विष्णुपुराणे श्लेषप्रसादलालित्यौजःसुकुमारतागुणाः प्राचुर्येणोपलभ्यन्ते परं माधुर्यसौभाग्यप्राशस्त्यगुणानां स्वल्पः प्रयोगः। मार्कण्डेयपुराणेऽपि माधुर्यसौभाग्यप्राशस्त्यानामल्पीयसी मात्रा श्लेषप्रसादलालित्यौजसां च बाहुल्यम्। सुकुमारतागुणोऽपि यत्र तत्रोपलभ्यते। भागवतपुराणे च श्लेषप्रसादलालित्यौजः सुकुमारतागुणाः प्राचुर्येण प्रयुक्ताः। परं यदा वैदिकानां विशिष्टस्वरूपाणां वा पदानां प्रयोगो जायते तदा प्रसादगुणहानिः सम्पद्यते। माधुर्यसौभाग्यप्राशस्त्यगुणा अत्रापि स्वल्पाः परमस्य पुराणस्य विस्तृतत्त्वात विष्णुमार्कण्डेयपुराणयोर्गुणेभ्यो द्वित्रगुणा अधिकाः।

---

१. मार्कण्डेयपु० १, २

पञ्चमोऽध्यायः

# रीतिविवेचनम्

## रीतिशब्दस्यार्थः

रियतेर्धातोःक्तिनि क्तिचि वा रीतिरिति शब्दो निष्पद्यते ।[1] भोजराजेन रीतेर्व्युत्पत्तिप्रवृत्तिनिमित्तकार्थावेवं प्रदर्शितौ—

**वैदर्भादिकृतः पन्थाः काव्ये मार्ग इति स्मृतः ।**
**रीङ् गताविति धातोः सा व्युत्पत्त्या रीतिरुच्यते ॥[2]**

विदर्भादिदेशप्रभवैः कविभिः प्रवर्तितः पन्थाः ( रचनाप्रकारः ) काव्ये मार्ग इति नाम्ना प्रसिद्धः । गत्यर्थकाद्रीङितिधातोरस्य रीतिशब्दस्य व्युत्पत्तिः। वैदर्भादयः कवयः काव्येषु यया पदव्या पद्धत्या वा गच्छन्ति (काव्यविरचनं विदधति) सैव रीतिः ।[3]

वामनेन रीतिशब्दस्य प्रवृत्तिनिमित्तं लक्षणमेवं विहितम्—

विशिष्टपदरचना रीतिः — विशेषवती पदानां रचना रीतिः ।[4] विशेषश्च तेनैवं लक्षितम् — विशेषो गुणात्मा — वक्ष्यमाणगुणरूपो विशेषः ।[5] गुणस्य चेदं लक्षणम् — काव्यशोभायाः कर्त्तारो धर्मा गुणाः — ये खलु शब्दार्थयोर्धर्माः काव्यशोभां कुर्वन्ति ते गुणाः ।[6] एवं शब्दार्थयोः शोभाधायकैर्गुणैर्युक्ता पदरचनैव रीतिरिति वामनसम्मतं रीतिलक्षणम् । पदप्रयोगविधिरेव पदरचना ।

---

१. रीति—(स्त्री०) (री + क्तिन् वा क्तिच्) : जयशङ्करजोशिकृतः संस्कृतशब्दार्थकौस्तुभः, पृ० ९४५

२. सरस्वतीक० २, २७

३. रीङ् गताविति, रियन्ते परम्परया गच्छन्त्यनयेति करणसाधनोऽयं रीतिशब्दो मार्गपर्याय इत्यर्थः । तत्रैव २, २७, वृत्तिभागः

४. काव्याल० सू० १, २, ७, वृत्तिभागश्च ।

५. तत्रैव १, २, ८, वृत्तिभागश्च

६. तत्रैव ३, १, १, वृत्तिभागश्च

# अग्निपुराणवर्तिरीतिभागस्य वैशिष्ट्यम्

अग्निपुराणोपलब्धमहाकाव्यलक्षणे वृत्तिप्रवृत्तिभावरसगुणैः सार्धं रीतीनामप्यपरिहार्या स्थितिः प्रोक्ता । अस्य पुराणस्य ३४० तमेऽध्याये चतुर्विधा रीतयः सविस्तरं व्याख्याताः । भरतसम्मता आवन्त्यादिप्रवृत्तयो नाट्योपयोगिनीं काञ्चिद् विशिष्टां भाषाम् (रीतिम्) अप्यभिसूचयन्ति ।[1] एवं यथा भरतेन नाट्यप्रसङ्गादावन्त्यादयः प्रवृत्तयो वर्णितास्तथैवाग्निपुराणेऽपि नाट्यप्रसङ्गतोऽभिनयावसरे भृशमुपयोगिन्या भाषणकलायाः सम्यग्ज्ञानाय चतस्रो रीतयो व्याख्याताः ।[3]

दण्डिना काव्यादर्शे वैदर्भगौडीयाख्ये द्वे काव्ये (रीती) वर्णिते । वैदर्भमार्गस्य श्लेषादयो दश गुणाः प्राणा इति प्रोच्य गौडीयमार्गे गुणानामत्यन्ताभावोंऽशतो वा ग्रहणमिति निगदितम् ।[4] एवं दण्डिना रीतिभिः सार्धं गुणानां प्रत्यक्षसम्बन्धः प्रदर्शितः वामनेन गुणा रीतीनामुपादानकारणत्वेनाङ्गीकृतानि तद्वती रचनैव तेन रीतिरिति प्रोक्ता ।[5] रीतीनां विभाजनमपि गुणानां मात्राभेदेन विहितः ।[6] परमग्निपुराणोक्तरीतीनामत्रोक्तैर्गुणैः सार्धं न कोऽपि प्रत्यक्षसम्बन्धो दृश्यते ।

अत्र रीतीनां लक्षणेषु श्लेषादीनां गुणानामनिवार्या स्थितिर्नोक्ता न च रीतीनां विभाजनं गुणानाश्रित्य विहितम् । समासानामलङ्काराणां च परिमाणमेवात्र रीतिनिर्धारणस्य प्रमुखतम आधारः ।

अत्र पुराणे पाञ्चाली, गौडीया, वैदर्भी, लाटीया चेति चतस्रो रीतयो वर्णिताः ।[7] एतासां वर्गीकरणस्येमे त्रयो हेतवः — (१) समासानां न्यूनाधिकपरिमाणे प्रयोगः (२) अलङ्काराणां प्राचुर्यं न्यूनत्वं वा (३) मृदुवर्णानां च न्यू-

---

१. तमसा मरुताऽप्यन्यैर्विभावैरतिनिर्भरैः ।
सर्ववृत्तिप्रवृत्तं च सर्वभावप्रभावितम् ॥
सर्वरीतिरसैः स्पृष्टं पुष्टं गुणविभूषणैः ।
अतएव महाकाव्यं तत्कर्त्ता च महाकविः ॥ अग्निपु० ३३७, ३१-३२

२. अत्राह—प्रवृत्तिरिति कस्मादिति । उच्यते—पृथिव्यां नानादेशवेषभाषाचारवार्ताः ख्यापयतीति प्रवृत्तिः । नाट्यशा० १४, ३६, गद्यभागः

३. वाग्विद्यासम्प्रतिज्ञाने रीतिः साऽपि चतुर्विधाः । अग्निपु० ३४०, १

४. काव्याद० १, ४२

५. काव्याल० १, २, ७

६. काव्याल० १, २, ११-१३

७. अग्निपु० ३४०, २

नता प्रचुरता वा । पाञ्चाली रीतिः कोमलपदान्विता सालङ्कारा स्वल्पसमासवती च मता परं गौडीया रीतिर्दीर्घसमासाऽस्थिरार्थवती च निगदिता । वैदर्भ्यां रीत्यां समासानामत्यन्ताभावोऽतिमृदुवर्णाश्च नास्यां प्रयुज्यन्ते । सामान्यत एषा निरस्तालङ्कारा प्रोक्ता परं यद्यस्यामलङ्काराः प्रयुज्येरन् तर्हि तेषां परिमाणमत्यल्पं भवेत् । लाटीयाया रीतेर्वाक्यरचना सुविशदा स्वल्पसमासाऽलङ्काररहिता चोक्ता । अग्निपुराणे रीतीनां पाञ्चालीगौडीयाप्रभृतीनि यानि नामानि प्रयुक्तानि तानि स्वसम्बद्धान् देशविशेषानभिसूचयन्ति । दण्डिवामनादिवदग्निपुराणकारोऽपि तत्तद्देशेषु प्राधान्येन प्रचलिता रीतीरनुरुध्य तत्तद्देशनामान्युपादाय रीतीनां नामानि निरणैषीदिति प्रतीयते ।[1]

अग्निपुराणे रीतीनां वर्णनं नाट्यप्रसङ्गे विहितमिति पूर्वं प्रतिपादितम् । अस्मादिमा रीतयोऽभिनयावसरे भाष्यमाणया भाषया सह सविशेषं सम्बद्धाः । अपरञ्चाग्निपुराणे काव्यनाट्ययोर्मूलभूतो न कोऽपि भेदः प्रदर्शितः । एतन्मतेन रसा इव रीतयोऽपि काव्यनाट्याभ्यां सार्धं सम्बद्धा यतो हि वृत्तिप्रवृत्तिभावरीतिगुणरसाः सर्व एव महाकाव्यस्योपादानकारणत्वेन मताः ।[2]

एवमग्निपुराणवर्णिता इमा रीतयोऽभिनयावसरे पात्राणां नाट्योपयोगिन्या भाषायाः प्रकारविशेषान् प्रदर्शयन्ति काममिमे प्रकारविशेषा नाट्यस्योपादानकारणानि न स्युः । इमान् प्रकारानाश्रित्यैव नाट्यस्य पात्राणि सम्भाषन्ते । परं नाट्यप्रसङ्गतो वृत्तिप्रवृत्तिभिः सार्धं वर्णितमपीदमग्निपुराणस्य रीतिवर्णनं नाट्येतरेण श्रव्यकाव्येन सार्धं तावन्तमेव सम्बन्धं भजते यावन्तं खलु नाट्यकाव्येन सार्धम् । वस्तुतो रीतीनामिमानि लक्षणानि सर्वविधकाव्यविषयकानि । रीतीनां वर्णनमिदं संस्कृतभाषायाः काव्यशास्त्रे नाट्यशास्त्रे चाद्वितीयं स्थानं लब्धुमर्हति ।[3]

## अग्न्यादिपुराणेषु रीतीनां लक्षणानि प्रयोगाश्च

अग्निपुराणस्य ३४० तमेऽध्याये चतस्त्र इमा रीतयो वर्णिताः —

१. पाञ्चाली २. गौडीया ३. वैदर्भी ४. लाटीया च । अस्मिन् विभागेऽग्निपुराणवर्णितरीतीनां सरस्वतीकण्ठाभरणोक्तरीतिभिः सार्धं तुलनात्मकमध्ययनं विधाय विष्णुमार्कण्डेयभागवतेभ्यस्तासां निदर्शनानि प्रस्तूयन्ते ।

---

१. अग्निपु० ३४०, १

२. तत्रैव ३३७, ३१-३२

३. P. C. Lahiri : Concepts of Rīti and Guṇa, p. 184

## १. पाञ्चाली

अग्निपुराणोक्तलक्षणम् —

**उपचारयुता मृद्वी पाञ्चाली ह्रस्वविग्रहा ।**[1]

सालङ्कारा मृदुवर्णाऽल्पसमासा रीतिः पाञ्चालीतिनाम्ना व्यपदिष्टा । सरस्वतीकण्ठाभरणोक्तलक्षणमग्निपुराणोक्तलक्षणेन सार्धमंशतः सङ्गच्छते ।[2] मधुराणां कोमलपदानां च प्रयोगस्योभयत्रैव विधानम् । अग्निपुराणेनास्यामलङ्काराणां प्रयोगोऽप्यनिवार्यतो मतः सरस्वतीकण्ठाभरणे चास्यां पञ्चषपदानां समासस्यावस्थितिरङ्गीकृता ।

मार्कण्डेयपुराणे विश्वकर्मकृतसूर्यस्तवः —

**अमृतमयेन रसेन समं विबुधपितॄनपि तर्पयसे ।**
**अरिगणसूदन तेन तव प्रणतिमुपेत्य लिखामि वपुः ।।**[3]

अत्र तनादिवर्णानामावृत्तेरनुप्रासः । पदान्यपि कोमलानि स्वल्पश्च समासः । अतएवात्र पाञ्चाली रीतिः ।

भागवतपुराणस्येदं मङ्गलाचरणम् —

**निगमकल्पतरोर्गलितं फलं**
**शुकमुखादमृतद्रवसंयुतम् ।**
**पिबत भागवतं रसमालयं**
**मुहुरहो रसिका भुवि भावुकाः ।।**[4]

अत्र निगमकल्पतरोरिति पदे शुकमुखादिति पदे च रूपकालङ्कारः । एतयोः पदयोः स्वल्पसमासः कोमलाक्षराणामप्यत्र बाहुल्यम् । अस्मादत्र पाञ्चाली रीतिः ।

---

१. अग्निपु० ३४०, २

२. समस्तपञ्चषपदामोजःकान्तिविवर्जिताम् ।
मधुरां सुकुमारां च पाञ्चालीं कवयो विदुः ।। सरस्वतीक० २, ३०

३. मार्कण्डेयपु० १०४, ६

४. भागवतपु० १, १, ३

## २. गौडीया

अग्निपुराणोक्तलक्षणम् —

**अनवस्थितसन्दर्भा गौडीया दीर्घविग्रहा ।**[1]

अव्यवस्थितवाक्यघटनासंवलिता दीर्घसमासयुक्ता च रीतिर्गौडीयेति प्रोच्यते । दीर्घसमासानां प्रयोगादस्यां रीतौ वाक्यरचना क्लिष्टा जायते कर्तृक्रिया-कर्मणां विषयेऽपि न कापि व्यवस्था दृश्यते । सरस्वतीकण्ठाभरणोक्तलक्षणमग्नि-पुराणोक्तलक्षणेन सह संवदति । तत्रापि दीर्घसमासानामोजःकान्तिगुणयोरुद्भटप-दानां च प्रयोगस्य विधानं विहितम् ।[2]

शिशुपालजन्मजन्मान्तरप्रसङ्गे तदीयभगवद्रूपचिन्तनवर्णनम् —

ततस्तमेवाक्रोशेषूच्चारयंस्तमेव हृदयेन धारयन्नात्मवधाय यावद्भगवद्ध-स्तचक्रांशुमालोज्ज्वलमक्षयतेजस्स्वरूपं ब्रह्मभूतमपगतद्वेषादिदोषं भगवन्तमद्रा-क्षीत् ।[3]

अत्र दीर्घसमासानां संयुक्तवर्णानां च सद्भावाद् गौडीया रीतिः ।

मार्कण्डेयपुराणे बलरामस्य रैवतकवनदर्शनवर्णनम् —

**सर्वर्तुफलभाराढ्यान्सर्वर्तुकुसुमोज्ज्वलान् ।**
**अपश्यत्पादपांस्तत्र विहगैरनुनादितान् ॥**
**पनसांल्लकुचान्मोचान्नीपांश्चातिमनोहरान् ।**
**पारावतांश्च कङ्कोलान्नलिनानम्लवेतसान् ॥**[4]

अत्रानवस्थितसन्दर्भाद्दीर्घसमासानां भावाच्च गौडीया रीतिः ।

भागवतपुराणे भारतवर्षवर्णनम् —

यत्र ह देवपतयः स्वैः स्वैर्गणनायकैर्विहितमहार्हणाः सर्वर्तुकुसुमस्तबक-फलकिसलयश्रियाऽऽनम्यमानविटपलताविटपिभिरुपशुम्भमानरुचिरकाननाश्रमाय - तनवर्षगिरिद्रोणीषु तथा चामलजलाशयेषु विकचविविधनववनरुहामोदमुदितराज-हंसजलकुक्कुटकारण्डवसारसचक्रवाकादिभिर्मधुकरनिकराकृतिभिरुपकूजितेषु जल-

---

१. अग्निपु० ३४०, २

२. समस्तात्युद्भटपदामोजःकान्तिगुणान्विताम् ।
गौडीयेति विजानन्ति रीतिं रीतिविचक्षणाः ॥ सरस्वतीक० २, ३१

३. विष्णुपु० ४, १५, १४

४. मार्कण्डेयपु० ६, ११, १३

क्रीडादिभिर्विचित्रविनोदैः सुललितसुरसुन्दरीणां कामकलिलविलासहासलीलावलोकाकृष्टमनोदृष्टयः स्वैरं विहरन्ति ।[1]

अत्र दीर्घसमासानां सद्भावाद् गौडीया रीतिः ।

भागवतपुराणे विष्णुस्वरूपवर्णनम् —

**श्यामो हिरण्यरशनोऽर्ककिरीटजुष्टो**
**नीलालकभ्रमरमण्डितकुण्डलास्यः ।**
**कम्बवब्जचक्रशरचापगदासिचर्म-**
**व्यग्रैर्हिरण्मयभुजैरिव कर्णिकारः ॥[2]**

अत्रापि दीर्घसमासानां सद्भावाद् गौडीया रीतिः ।

## ३. वैदर्भी

अग्निपुराणोक्तलक्षणम् —

**उपचारैर्न बहुभिरुपचारैर्विवर्जिता ।**
**नातिकोमलसन्दर्भा वैदर्भी मुक्तविग्रहा ॥[3]**

एषा रीतिर्नातिन्यूनं नत्याधिकमलङ्कारप्रयोगं नातिकोमलानि च पदान्यपेक्षते । समासा अत्र न प्रयुज्यन्ते । सरस्वतीकण्ठाभरणोक्तलक्षणमग्निपुराणोक्तलक्षणाद् विसंवदति । तन्मतेन श्लेषादीनां समस्तगुणानां सङ्गीतविद्यासम्बद्धताललयादीनां चात्र सन्निवेशोऽपेक्षणीयः । असमासेति विशेषणमेवाग्निपुराणोक्तलक्षणानुकूलम् ।[4]

विष्णुपुराणे सनन्दनादियोगिनो वराहावतारधारिणं विष्णुं स्तुवन्ति —

**सर्गप्रवृत्तिर्भवतो जगतामुपकारिणी ।**
**भवत्वेषा नमस्तेऽस्तु शन्नो देह्यब्जलोचन ॥[5]**

अत्र समासानामभावादलङ्काराणां कोमलपदानां च नातिप्रयोगाद्वैदर्भी-रीतिः ।

---

१. भागवतपु० ५, १७, १३

२. तत्रैव ४, ७, २०

३. अग्निपु० ३४०, ३

४. तत्रासमासा निःशेषश्लेषादिगुणगुम्फिता ।
विपञ्चीस्वरसौभाग्या वैदर्भी रीतिष्यते ॥ सरस्वतीक० २, २९

५. विष्णुपु० १, ४, ४४

भागवतपुराणे रासलीलाप्रसङ्गे चन्द्रोदयवर्णनम् —

तदोडुराजः ककुभः करैर्मुखं
प्राच्या विलिम्पन्नरुणेन शन्तमैः ।
स चर्षणीनामुदगाच्छुचो मृजन्
प्रियः प्रियाया इव दीर्घदर्शनः ॥[1]

अत्र समासोक्तिरलङ्कारो नातिकोमलवर्णानां प्रयोगः समासस्य चाभावः । एतस्मादत्र वैदर्भी रीतिः ।

## ४. लाटीया

अग्निपुराणोक्तलक्षणम् —

लाटीया स्फुटसन्दर्भा नातिविस्फुटविग्रहा ।
परित्यक्ताभिभूयोऽपि उपचारैरुदाहृता ॥[2]

यत्र सुविशदा वाक्यरचना स्वल्पसमासा अनलङ्कारा च भाषा प्रयुज्यते तत्र लाटीयेति रीतिः । सरस्वतीकण्ठाभरणोक्तावन्तिकारीतिलक्षणेन सहैतल्लक्षणं सङ्गच्छते ।[3]

युगलगीतप्रसङ्गे यशोदां प्रति गोपिकानां कथनम् —

कुन्ददामकृतकौतुकवेषो
गोपगोधनवृतो यमुनायाम् ।
नन्दसूनुरनघे तव वत्सो
नर्मदः प्रणयिनां विजहार ॥[4]

अत्र वाक्यरचनाया विषयस्य च स्फुटत्वात्, स्वल्पसमासानां भावादलङ्काराणामभावाच्च लाटीयारीतिः ।

---

१. भागवतपु० १०, २९, २

२. अग्निपु० ३४०, ४

३. अन्तराले तु पाञ्चालीवैदर्भ्योर्यावतिष्ठते ।
सावन्तिका समस्तैः स्याद् द्वित्रैस्त्रिचतुरैः पदैः ॥ सरस्वतीक० २, ३२

४. भागवतपु० १०, ३५, २०

## समीक्षणम्

अग्निपुराणोक्तरीतीनां तल्लक्षणानां च विशिष्टैतत्पुराणवर्तिरीतिभागवैशिष्ट्यप्रसङ्गत आदावेव प्रदर्शिता । इमा हि रीतयोऽलङ्काराणां समासानां च परिमाणमाश्रित्य निर्धारिताः । विष्णुमार्कण्डेयभागवतपुराणेषु प्रायशः सर्वत्र चतसृणामासां रीतीनां सङ्करो दृश्यते । क्वचिच्चतस्र एव रीतयः क्वचित् तिस्रः क्वचिच्च द्वे एव रीती । अस्मादेतेषु पुराणेषु कस्यचित्पुराणविशेषस्य कतमा रीतिरिति निर्धारयितुमतीव दुष्करम् । तथाप्यत्र पुराणानामेतेषां रीतिनिर्धारणायापरा पद्धतिरवलम्बिता । सर्वेषां पुराणानां प्रत्येकमध्यायमधीत्य तस्य रीतिर्विचारिता । यस्मिन्नध्याय एकैव रीतिरस्ति न तत्र कोऽपि सन्देहः परं यत्रानेकासां रीतीनां साङ्कर्यं तत्र सर्वा रीतय आकलिताः । एतासां परिगणनाया अनन्तरं न्यूनाधिकसंख्याक्रमेण तासां न्यूनाधिकप्रयोगविनिर्णयो विहितः । एवं सामान्यतः पुराणानां निर्धारिता रीतयोऽधोलिखितप्रकाराः —

१. **विष्णुपुराणम्** — अस्मिन् पुराणे लाटीयायाः प्राचुर्येण प्रयोगः । गौडीयायाः प्रयोगो न्यूनतरः । वैदर्भीपाञ्चाल्यौ यत्र तत्र प्रायः समानपरिमाणे प्रयुक्ते परं लाटीयागौडीयाभ्यां चैतयोरल्पीयान् प्रयोगः ।

२. **मार्कण्डेयपुराणम्** — अत्र गौडीयारीतेः प्राधान्यम् । एतस्या अनन्तरं लाटीयायाः स्थानम् । तदनु वैदर्भीपाञ्चाल्योस्तुल्यपरिमाणे प्रयोगो दृश्यते ।

३. **भागवतपुराणम्** — अत्र पाञ्चाल्या बाहुल्येन प्रयोगः । तदपेक्षातो वैदर्भीरीतिः किञ्चिन्न्यूनतरा । गौडीया लाटीया च प्रायशः समपरिमाणे स्तः ।

# अनुशीलितग्रन्थपञ्जी

## हिन्दीसंस्कृतग्रन्थाः


| | |
|---|---|
| **अग्निपुराणम्** | आनन्दाश्रम सीरीज, पूना, प्रथमसंस्करणम्, संवत् १९९१। |
| **अग्निपुराण का काव्यशास्त्रीय भाग** | रामलाल वर्मा शास्त्री, नेशनल पब्लिशिंग हाउस, दिल्ली, प्रथमं संस्करणम्, फरवरी १९५९ क्रैस्ताब्दाः। |
| **अथर्ववेदः** | श्रीपाददामोदरसातवलेकरः, भारतमुद्रणालयम्, औंध, सतारा (बम्बई), १९४३ क्रैस्ताब्दाः। |
| **अभिज्ञानशाकुन्तलम्** | कालिदासः (शारदारञ्जनरेविरचिताङ्ग्लभाषानुवादसंवलितम्), के० रे, १७६, विवेकानन्द रोड, कलकत्ता। |
| **अलङ्कारशेखरः** | केशवमिश्रः, चौखम्बा संस्कृत सीरीज़ आफ़िस, बनारस, संवत् १९८४। |
| **अलङ्कारसूत्रम्** | राजानकरुय्यकः, त्रिवेन्द्रम संस्कृत सीरीज़, ट्रावनकोर। |
| **अष्टाध्यायी** | सिद्धान्तकौमुद्यन्तर्गतपाणिनीयाष्टाध्यायीसूत्रपाठः), वेंकटेश्वर स्टीम प्रेस, बम्बई, संवत् २००६। |
| **आपस्तम्बधर्मसूत्रम्** | सम्पा०, चिन्नस्वामिशास्त्री, चौखम्बा संस्कृत सीरीज़ आफ़िस, बनारस, सं० १९८७। |
| **ऋग्वेदः** | श्रीपाददामोदरसातवलेकरः, भारतमुद्रणालयम्, औंध, सतारा (बम्बई), सं० १९९४। |
| **औचित्यविचारचर्चा** | क्षेमेन्द्रः, चौखम्बा संस्कृत सीरीज़ आफ़िस, बनारस, १९३३ क्रैस्ताब्दाः। |

काव्यादर्शः — दण्डी ( रङ्गाचार्यरैड्डीकृतवृत्तिसमेतम् ), भाण्डारकर ओरियण्टल रिसर्च इन्स्टीट्यूट, पूना, १९३७ क्रैस्ताब्दाः ।

काव्यालङ्कारः — भामहः ( सम्पा०, बटुकनाथशर्मा बलदेव उपाध्यायश्च ), चौखम्बा संस्कृत सीरीज़ आफ़िस, बनारस, १९३८ क्रैस्ताब्दाः ।

काव्यालङ्कारः — रुद्रटः (सम्पा०, दुर्गाप्रसाद वासुदेवशर्मा च), तृतीयं संस्करणम्, १९२८ क्रैस्ताब्दाः ।

काव्यप्रकाशः — मम्मटः ( वामनाचार्यविरचितटीकया समन्वितः ), पञ्चमं संस्करणम्, १९३३ क्रैस्ताब्दाः ।

काव्यप्रकाशः — मम्मटः ( गोविन्दठक्कुरविरचितकाव्यप्रदीपटीकया संवलितः ), आनन्दाश्रम सीरीज़, पूना, १९११ क्रैस्ताब्दाः ।

काव्यमीमांसा — राजशेखरः (सी० डी० दलालो आर० ए० शास्त्री च), बड़ौदा, १९२४ क्रैस्ताब्दाः ।

काव्यालङ्कारसारसंग्रहः — उद्भटः ( सम्पा०, के० एस० रामास्वामिशास्त्री), ओरियण्टल इन्स्टीट्यूट, बड़ौदा, १९३१ क्रैस्ताब्दाः ।

काव्यालङ्कारसूत्रवृत्तिः — वामनः ( आचार्यविश्वेश्वरकृतभाषाटीकया समुपेता ), आत्माराम एण्ड सन्स, प्रथमं संस्करणम्, १९५४ क्रैस्ताब्दाः ।

कौटिलीयार्थशास्त्रम् — चाणक्यः ( गङ्गाप्रसादशास्त्रिकृतहिन्दीटीकोपेतम् ), महाभारत कार्यालय, मालीवाड़ा, दिल्ली, द्वितीयं संस्करणम्, संवत् २०१० ।

गोपथब्राह्मणम् — सम्पा०, राजेन्द्रलालमित्रो विद्याभूषणश्च, कलकत्ता, १८७२ क्रैस्ताब्दाः ।

छान्दोग्योपनिषत् — नित्यानन्दकृतमिताक्षराव्याख्यासमेता, आनन्दाश्रम सीरीज़, पूना, १९१५ क्रैस्ताब्दाः ।

तैत्तिरीयोपनिषद् — (दशोपनिषदः, प्रथमो भागः) कुञ्जनराजः, अड्यारलाइब्रेरी, अड्यार, १९३५ क्रैस्ताब्दाः ।

दशरूपकम् — धनञ्जयः ( धनिककृतावलोकटीकयोपेतम् ), सम्पा०, नारायणरामः, निर्णयसागर प्रेस, बम्बई, १९४१ क्रैस्ताब्दाः ।

ध्वन्यालोकः — आनन्दवर्धनः ( आचार्यविश्वेश्वरकृतहिन्दी-टीकासहितः ) गौतम बुक डिपो, दिल्ली, प्रथमं संस्करणम्, १९५२ क्रैस्ताब्दाः ।

नाट्यशास्त्रम् — भरतः (बटुकनाथशर्मा बलदेव उपाध्यायश्च), चौखम्बा संस्कृत सीरीज आफ़िस, बनारस, १९२९ क्रैस्ताब्दाः ।

पद्मपुराणम् — सम्पा०, विश्वनाथनारायणः, आनन्दाश्रम सीरीज़, पूना, १८९३ क्रैस्ताब्दाः ।

बृहदारण्यकोपनिषत् — रङ्गरामानुजविरचितप्रकाशिकोपेता, आनन्दाश्रम सीरीज, पूना, १९११ क्रैस्ताब्दाः ।

ब्रह्माण्डपुराणम् — गङ्गाविष्णु, वेङ्कटेश्वर प्रेस, बम्बई, १९०६ क्रैस्ताब्दाः ।

भट्टिकाव्यम् — भट्टिकृतम् ( टीकाद्वयोपेतम् ), मुम्बापुरीस्थ-राजकीयग्रन्थशाला, १८९८ क्रैस्ताब्दाः ।

भविष्यपुराणम् — बम्बई, १९१० ।

भागवतपुराणम् — खण्डद्वयोपेतं भाषानुवादसहितं च (मुनिलाल-गुप्तो रामनारायणदत्तश्च ), गीताप्रेस, गोरखपुर, द्वितीयं संस्करणम्, सं० २००८ ।

भागवतपुराणम् — ( श्रीधरीयटीकोपेतम् ), वेंकटेश्वर प्रेस, बम्बई ।

भारतीय काव्यशास्त्र की परम्परा — डा० नगेन्द्र, नेशनल पब्लिशिंग हाउस, दिल्ली, संवत् २०१३ ।

भारतीय काव्यशास्त्र की भूमिका — (भाग २), डा० नगेन्द्र, ओरियण्टल बुक डिपो, दिल्ली, १९५५ ।

मत्स्यपुराणम् — आनन्दाश्रम सीरीज़, पूना, संवत् २०१३ ।

महाभारतम् — (षट्खण्डात्मकम्) रामनारायणदत्तशास्त्रि-कृतहिन्दीभाषानुवादोपेतम्, गीता प्रेस, गोरखपुर ।

मार्कण्डेयपुराणम् (भाषाटीकोपेतम्) कन्हैयालालमिश्रः, वेंकटेश्वर प्रेस, बम्बई, संवत् १९५८।

मुद्राराक्षसम् विशाखदत्तः (के० एच० ध्रुव), ओरियण्टल बुक एजेन्सी, पूना, तृतीयं संस्करणम्, १९३०।

यजुर्वेदः (खण्डद्वयात्मकः) भाषाभाष्यकारः, जयदेवशर्मा, आर्य साहित्य मण्डल लिमिटेड, अजमेर, प्रथमावृत्तिः, संवत् १९८८।

रघुवंशः कालिदासः (हरगोविन्दशास्त्रिकृतव्याख्योपेतः), चौखम्बा संस्कृत सीरीज़, बनारस, तृतीयं संस्करणम्, संवत् २००९।

रसगङ्गाधरः पण्डितराजजगन्नाथः (बदरीनाथझामदनमोहनझाकृतभाषानुवादसहितः), चौखम्बा विद्याभवन, बनारस, १९५५ क्रैस्ताब्दाः।

रामायणम् (भागद्वयोपेतम्) काशिनाथ-पाण्डुरङ्गः, बम्बई, १८८८ क्रैस्ताब्दाः।

रीतिकाव्य की भूमिका डा० नगेन्द्र, गौतम बुक डिपो, दिल्ली, १९५३।

वक्रोक्तिजीवितम् कुन्तकः (आचार्यविश्वेश्वरकृतहिन्दीव्याख्योपेतम्), आत्माराम एण्ड सन्स, दिल्ली, प्रथमं संस्करणम् १९५५।

वायुपुराणम् आनन्दाश्रम सीरीज़, पूना, १९०५ क्रैस्ताब्दाः।

विष्णुधर्मोत्तरपुराणम् सम्पा०, मधुसूदनशर्मा माधवप्रसादशर्मा च, वेंकटेश्वर प्रेस, बम्बई, संवत् १९६०।

विष्णुपुराणम् मुनिलालगुप्तकृतभाषानुवादसंवलितम्, गीता प्रेस, गोरखपुर, तृतीयं संस्करणम्, संवत् २००८।

वेणीसंहारम् सम्पा०, जी० वी० देवस्थली, बुकसेलर्स पब्लिशिंग कम्पनी, बम्बई।

व्यक्तिविवेकः महिमभट्टः (सम्पा०, मधुसूदनमिश्रः), चौखम्बा संस्कृत सीरीज़ आफ़िस, बनारस, १९९३ वैक्रमाब्दाः।

| | |
|---|---|
| शतपथब्राह्मणम् | (पञ्चखण्डात्मकम्) गङ्गाविष्णु, वेंकटेश्वर प्रेस, बम्बई, १७४० क्रैस्ताब्दाः । |
| शाङ्खायन श्रौतसूत्रम् | आनन्दाश्रम सीरीज़, पूना, १९२२ क्रैस्ताब्दाः । |
| शिवपुराणम् | वेंकटेश्वर प्रेस, बम्बई, संवत् १९८२ । |
| शृङ्गारप्रकाशः | भोजदेवः (प्रथमो भागः), श्रीवाणीविलास प्रेस, श्रीरङ्गम्, मद्रास, १९३९ क्रैस्ताब्दाः । |
| संस्कृत व्याकरण शास्त्र का इतिहास | युधिष्ठिर मीमांसक, भारतीय साहित्य भवन, दिल्ली, प्रथमं संस्करणम्, संवत् २००८ । |
| सरस्वतीकण्ठाभरणम् | भोजदेवः (सम्पा०, केदारनाथशर्मा वासुदेवलक्ष्मणशास्त्री च), निर्णय सागर प्रेस, बम्बई, १९३४ क्रैस्ताब्दाः । |
| सामवेदः | वैदिकयन्त्रालयः, अजमेर, संवत् १९८२ । |
| साहित्यदर्पणः | विश्वनाथः (शालिग्रामशास्त्रिकृतया विमलाटीकोपेतः), मोतीलाल बनारसीदास, वाराणसी, १९५६ क्रैस्ताब्दाः । |
| सिद्धान्त और अध्ययन | गुलाबरायः आत्माराम एण्ड सन्स, दिल्ली, प्रथम संस्करण, १९५५ क्रैस्ताब्दाः । |
| सिद्धान्तकौमुदी | भट्टोजिदीक्षितः (तत्त्वबोधिनीटीकासहिता), वेंकटेश्वर प्रेस, बम्बई, संवत् २००९ । |
| सिद्धान्तकौमुदी | भट्टोजिदीक्षितः (बालमनोरमादिटीकात्रयोपेता, खण्डद्वयात्मिका), सीतारामशास्त्री, श्रीराजस्थान संस्कृतकालेज ग्रन्थमाला, काशी, प्रथमं संस्करणम्, संवत् १९९७ । |
| हर्षचरितम् | बाणः, गवर्नमेण्ट सैण्ट्रल प्रेस, बम्बई, १९०९ क्रैस्ताब्दाः । |
| हरिवंशपुराणम् | रामनारायणदत्तशास्त्रिकृत हिन्दीव्याख्योपेतम्, गीताप्रेस, गोरखपुर । |
| हिन्दी अभिनवभारती | अभिनवगुप्ताचार्यः (आचार्यविश्वेश्वरकृतभाषानुवादसमुपेता), दिल्ली, १९६० । |

## ENGLISH BOOKS

| | |
|---|---|
| **Agnipuranam** | M. N. Dutt (English translation in two volumes), Calcutta, 1904. |
| **A History of Sanskrit Literature** | A. A. Macdonell, William Heinemann, London, 1917. |
| **A History of Sanskrit Literature** | A. B. Keith, Oxford University Press, London, 1941. |
| **Ancient Indian Historical Tradition** | F. E. Pargiter, Oxford University Press, London, 1922. |
| **Concepts of Riti and Guna** | P. C. Lahiri, The University of Dacca, Dacca, 1937. |
| **History of Sanskrit Literature** | C. V. Vaidya, Poona, 1930. |
| **History of Sanskrit Literature** | Winternitz (in two volumes), translated from German by Mrs. Ketkar, University of Calcutta, 1933. |
| **History of Sanskrit Poetics** | Sushil Kumar De (in two volumes), Firma K. L. Mukhopadhyaya, 2nd edition, Calcutta, 1960. |
| **The Number of Rasas** | V. Raghavan, Adyar Library, Adyar, (Madras), 1940. |
| **The Sahityadarpana of Visvanatha and the History of Sanskrit Poetics** | P. V. Kane, 3rd edition, Bombay, 1951. |
| **Visnupurana** | H. H. Wilson (English translation), Oxford University Press, London, 1840. |

## PERIODICALS AND JOURNALS

1. Annals of Bhandarkar Oriental Research Institute, Poona, Vol. XVIII, 1967; Vol. XVI, 1932-33.
2. Bulletin of the Deccan College Research Institute, Vol. 20, Part I.

3. Sushil Kumar De Felicitation Volume, Poona, 1957.
4. Journal of the Bombay Branch of the Royal Asiatic Society, Vol. I, 1925.
5. Indian Antiquary, Vol. V, 1940-43.
6. Poona Orientalist, Vol. I, No. I, April, 1957.
7. Woolner Commemoration Volume, Mehar Chand Lachhman Das, Lahore, 1940.
8. नागरीप्रचारिणी पत्रिका, त्रैमासिक, सम्पादक, वासुदेवशरण अग्रवाल, काशीनागरी प्रचारिणी सभा, वाराणसी, अङ्क १–४, संवत् २००१।
9. Purāṇam, V. S. Agrawal, Vyāsapūrṇimā Number, Vol. II, No. 1-2, July, 1960, Vol. I, No. 2, Feb., 1960, Vasanta Pañcamī Number, Vārāṇasī.
10. Prajñā, V. S. Agrawal, Banaras Hindu University Journal, Part III, 1959.

## कोशग्रन्थाः

| | |
|---|---|
| **धातुरत्नाकरः** | मुनिश्रीलावण्यविजयः जैनग्रन्थ-प्रकाशकसभा, अहमदाबाद, प्रथमावृत्तिः (खण्डद्वयात्मकः)। |
| **न्यायकोशः** | भीमाचार्यझलकीकरः, निर्णयसागर प्रेस, बम्बई, १९८३ क्रैस्ताब्दाः। |
| **पद्मचन्द्रकोशः** | गणेशदत्तशास्त्रिकृतः, मेहरचन्द लछमनदास, लाहौर। |
| **शब्दार्थचिन्तामणिः** | सज्जनयन्त्रालयः, उदयपुरम्, १८८५। |
| **शब्दार्थचिन्तामणिः** | घासीराम कन्हैयालाल, आगरा, संवत् १९२१। |
| **संस्कृतशब्दार्थकौस्तुभः** | ( द्वारकाप्रसादचतुर्वेदि-तारिणीशझाकृतः ), रामनारायणलाल, इलाहाबाद, द्वितीयं संस्करणम्, १९५७ क्रैस्ताब्दाः। |
| **हलायुधकोशः** | सम्पादकः, जयशङ्करोजोशी, प्रकाशन ब्यूरो, उत्तरप्रदेशीयसूचनाविभागः, लखनऊ, प्रथमं संस्करणम्, संवत् २०१४। |

# कारिकानुक्रमणिका

# श्लोकानुक्रमणिका

## जम्मूविश्वविद्यालय के अन्य प्रकाशन—

| | | |
|---|---|---|
| १. | कालिदासविशेषाङ्कः १९७३, सं०—डा० वेदकुमारी | रु०. ५.०० |
| २. | रघुनाथगुणोदय का आलोचनात्मक अध्ययन<br>डा० गङ्गादत्त शास्त्री | रु०. २०.०० |
| ३. | भास के कतिपय नाटकों का डोगरी अनुवाद<br>डा० रामनाथ शास्त्री | रु०. १०.०० |

## लेखक की अन्य कृतियां—

| | | |
|---|---|---|
| १. | सांस्कृतिक और साहित्यिक निबन्ध<br>(भारतीय विद्याप्रकाशन, कचौड़ी गली, वाराणसी) | रु०. ७.५० |
| २. | राजेन्द्रकर्णपूरः (हिन्दी अनुवाद सहित)<br>(वितरक—भारतीय विद्याप्रकाशन, कचौड़ी गली, वाराणसी) | रु०. ५.०० |